# अथ तृतीयाध्यायस्य प्रथमः पादः

१—प्रत्ययः । २—परश्च । पञ्चमाध्मायान्तं यावत् अधिक्रियते ।

५—गुप्तिज्किद्भ्यः सन् । जुगुप्सते । तितिक्षते । चिकित्सति ।

६—मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य । मीमांसते । बीभत्सते । दीदांसते । शीशांसते ।

७—धातोः कर्मणः समानकर्तृकादिच्छायां वा । पठितुमिच्छति पिपठिषति । कर्त्तुमिच्छति चिकीर्षति । भवितुमिच्छति बुभूषति ।

शैशिकान्मतुवर्थीयाच्छैशिको मतुवर्थिकः ।

सरूपः प्रत्ययोनेष्टः सन्नन्तान्न सनिष्यते ।।

नेह—चिकीर्षितुमिच्छति । स्वार्थे सन्नन्तात्तुस्यादेव मीमांसिषते । जुगुप्सिषते ।

८—सुप आत्मनः क्यच् । आत्मनः पुत्रमिच्छति पुत्रीयति वा । ( मान्त प्रकृतिकादव्ययाच्च न ) इदमिच्छति । किमिच्छति । स्वरिच्छति ।

९—काम्याच्च । आत्मनः पुत्रमिच्छति, पुत्रकाम्यति । वस्त्रकाम्यति । यशस्काम्यति । सर्पिष्काम्यति किं काम्यति । स्वः काम्यति ।

१०—उपमानादाचारे । पुत्रमिवाचरति पुत्रीयतिच्छात्रान् । विष्णूयति द्विजम् । ( अधिकरणाच्चेतिवाच्यम् ) प्रासादीयति कुट्यां भिक्षुः । कुटीयति प्रासादे ।

११—कर्तुः क्यङ् सलोपश्च । सलोपोव्यवस्थितः । ( ओजसोऽप्सरसो नित्यमितरेषां विभाषया ) कृष्ण इवाचरति कृष्णायते । ओजायते । अप्सरायते । यशायते । यशस्यते । विद्वस्यते । ( प्रत्ययोत्तरपदयोश्च ) त्वद्यते । मद्यते । युष्मद्यते । अस्मद्यते । ( सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः ) कृष्णाति-कृष्णायते । मालाति-मालायते । कविरिवाचरति कवयति । पितेवाचरति पितरति ।

१३—लोहितादिडाज्भ्यः क्यष् । लोहितायति, लोहितायते । पटपटायति, पटपटायते ।

१८—**कष्टाय क्रमणे**। कष्टाय क्रमते कष्टायते।

१९—**शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे** शब्दं करोति शब्दायते इत्थमेव वैरायते, कलहायते, अभ्रायते, कण्वायते, मेघायते।

२०—**नमोवरिवश्चित्रङः क्यच्**। नमस्यति देवान्। वरिवस्यति गुरून्। चित्रीयते।

२१—**मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्योणिच्**। मुण्डं करोति मुण्डयति। मिश्रयति। श्लक्ष्णयति। लवणयति। (व्रताद्भोजनतन्निवृत्त्योः) व्रतयति। ( हलादिभ्यो ग्रहणे ) हलिं कलिं वा गृह्णाति हलयति, कलयति ( वस्त्रात्समाच्छादने ) संवस्त्रयति।

२२—**धातोरेकाचो हलादेः क्रियासमभिहारे यङ्**। पुनः पुनः अतिशयेन वा भवति बोभूयते। पुनः पुनः पचति पापच्यते। यायज्यते। जाज्वल्यते। देदीप्यते।

२३—**नित्यं कौटिल्ये गतौ**। कुटिलं व्रजति वाव्रज्यते। चङ्क्रम्यते। जङ्गम्यते।

२४—**लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम्**। गर्हितं लुम्पति, लोलुप्यते। सासद्यते। चञ्चूर्यते। जञ्जप्यते। जञ्जभ्यते। दंदह्यते। दंदश्यते। जेगिल्यते।

२५—**सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्**। सत्यं करोति आचष्टे वा सत्यापयति। पाशयति। रूपं पश्यति, रूपयति। वर्णयति। चोरयति। कथयति। गणयति। अवलोकयति। भक्षयति। बन्धयति।

२६—**हेतुमति च**। भवन्तं प्रेरयति इति भावयति। ओदनं पचन्तं प्रेरयति इति ओदनं पाचयति। कटं कारयति। ( तत्करोति तदाचष्टे ) ( प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च )। पटुमाचष्टे पाटयति। हस्तयति।

२७—**कण्ड्वादिभ्यो यक्**। कण्डूयति। कण्डूयते। वल्गूयति।

२८—**गुपूधूपविच्छपणिपनिभ्य आयः**। गोपायति। धूपायति। विच्छायति। पणायति। पनायति। स्तुतौ व्यवहारे तु पणते। पेणे। पणिता। पाणिष्यते।

३०—**कमेर्णिङ्**। कामयते।

३१—आयादय आर्धधातुकेवा । गोपायिता-गोपिता गोप्ता । कामयिता-कमिता ।

३२—सनाद्यन्ता धातवः । पिपठिषति । पुत्रीयति । पुत्रकाम्यति ।

३३—स्यतासी लृलुटो । भविष्यति । अभविष्यत् । श्वो भविता ।

३५—कास्प्रत्ययादाममंन्त्रे लिटि । ( कास्यनेकाच इति वाच्यम् ) काशाञ्चक्रे । दरिद्रांचकार ।

३६—इजादेश्च गुरुमतोऽनृच्छः । ईहाञ्चक्रे । ऊहाञ्चक्रे । एधाञ्चक्रे । ऋच्छेस्तु आनर्च्छ । ( ऊर्णोतेराम्नेति वाच्यम् ) ऊर्णुनाव ।

३७—दयायासश्च । दयाञ्चक्रे । पलायाञ्चक्रे । आसाञ्चक्रे ।

३८—उषविदजागृभ्योऽन्यतरस्याम् । ओषाञ्चकार-उवोष । विदाञ्चकार-विवेद । जागराञ्चकार-जजागार ।

३९—भीह्रीभृहुवां श्लुवच्च । बिभयाञ्चकार बिभाय । जिह्रयाञ्चकार, जिह्राय । बिभराञ्चकार बभार । जुहवाञ्चकार-जुहाव ।

४०—कृञ्चानु प्रयुज्यते लिटि । एधाञ्चक्रे । एधाम्बभूव । एधामास ।

४१—विदाङ्कुर्वन्त्वित्यन्यतरस्याम् । विदाङ्कुर्वन्तु, विदन्तु ।

४३—च्लिलुङि । ४४—च्लेः सिच् । अकार्षित् । अभूत् । अदात् । अपात् । अद्राक्षीत् । आतीत् ।

४४—च्लेः सिच् । अकार्षीत्, अहार्षीत् ।

( स्पृशमृशकृषतृपदृपां सिज् वा वाच्यः ) अस्प्राक्षीत्-अस्पार्क्षीत् । अस्पृक्षत् । अतर्पीत् । अत्राप्सीत् अतार्प्सीत् । अतृपत् । अदर्पीत् । अद्राप्सीत्-अदार्प्सीत् । अदृपत् ।

४५—शल इगुपधादनिटः क्सः । अलिक्षत् । अधुक्षत् ।

४६—श्लिष आलिङ्गने । आश्लिक्षत् कन्यां माता । अन्यत्र आश्लिषज्जतु काष्ठम् ।

४७—न दृशः : ( इरितोवा ) इत्यङ् सिचौ भवतः—अदर्शत्-अद्राक्षीत् ।

४८—णिश्रिद्रुस्रुभ्यः कर्त्तरिचङ् । अशीभवत् । अचीकरत् । अशिश्रियत् । अदुद्रुवत् । असुस्रुवत् । ( कमेरुपसंख्यानम् ) अचकमत् णिङ्पक्षेतु सन्वद्भावः-अचीकमत् ।

४९—विभाषाधेट्श्व्योः । अदधत्-अधात्-अधासीत् । अशिश्वियत्-अश्वत्-अश्वयीत् ।

५२—अस्यतिवक्तिख्यातिभ्योऽङ् । पर्यास्थत । अवोचत् । आख्यत् ।

५३—लिपिसिचिह्वश्च । अलिपत् । असिचत् । अह्वत् ।

५४—आत्मनेपदेष्वन्यतरस्याम् । अलिपत-अलिप्त । असिचत-असिक्त । अह्वत-अह्वास्त ।

५५—पुषादिद्युताद्य्लृदितः परस्मैपदेषु । पुषादिर्दिवाद्यन्तर्गणो गृह्यते न भ्वादिक्र्याद्यन्तर्गणः । अपुषत् । अद्युतत् । अद्युतत् । अश्वितत् । अगमत् । अशकत् । आत्मनेपदे तु अद्योतिष्ट । अश्वेतिष्ट ।

५६—सर्तिशास्त्यर्तिभ्यश्च । असरत् । अशिषत् । आरत् ।

५७—इरितोवा । अभिदत् । अभैत्सीत् । अच्छिदत् । अच्छैत्सीत् । अच्छिदत् । अच्छैत्सीत् । आत्मनेपदे तु अभित्त । अच्छित्त ।

५८—जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च । अजरत्-अजारीत् । अस्तभत्-अस्तम्भीत् । अम्रुचत्-अम्रोचीत् । अग्रुचत्-अग्रोचीत् । अम्लुचत्-अम्लोचीत् । अग्लुचत्-अग्लुञ्चीत् । अश्वत् अशिश्वयत्-अश्वयीत् ।

६०—चिण् ते पदः । अपादि ।

६१—दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम् । अदीपि-अदीपिष्ट । अजनि-अजनिष्ट । अबोधि-अबुद्ध । अपूरि-अपूरिष्ट । अतायि-अतायिष्ट । अप्यायि-अप्यायिष्ट ।

६२—अचः कर्मकर्त्तरि । अकारि-अकृत कटः स्वयमेव । अलावि-अलाविष्ट ।

६३—दुहश्च । अदोहि-अदुग्ध गौः स्वयमेव ।

६४—न रुधः । अवारुद्ध गौः स्वयमेव ।

६५—तपोऽनुतापे च । अन्वतप्त पापेन ।

६६—चिण्भावकर्मणोः । अभावि । अकारि घटः कुलालेन ।

६७—सार्वधातुके यक् । भूयते । अनुभूयते ।

६८—कर्त्तरिशप् । भवति । पचति ।

६९—दिवादिभ्यःश्यन् । दीव्यति । सीव्यति ।

७०—वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः । भ्राश्यते भ्रासते । भ्लाश्यते-भ्लासते । भ्राम्यति-भ्रमति । क्राम्यति-क्रामति । क्लाम्यति क्लामति । त्रस्यति-त्रसति । त्रुट्यति-त्रुटति । लष्यति-लषति ।

७३—स्वादिभ्यःश्नुः । सुनोति । सिनोति ।

७४—श्रुवः शृच । शृणोति, शृणुतः, शृण्वन्ति ।

७६—तनूकरणे तक्षः । तक्ष्णोति तक्षति वा काष्ठम् ।

७७—तुदादिभ्यः शः । तुदति । नुदति इत्यादि ।

७८—रुधादिभ्यःश्नम् । रुणद्धि । भिनत्ति इत्यादि ।

७९—तनादिकृञ्भ्यः उः । तनोति, सनोति इत्यादि करोति कुरुतः, कुर्वन्ति ।

८१—क्र्यादिभ्यश्ना । क्रीणाति । प्रीणाति । गृह्णाति । जानाति ।

८३—हलः श्नः शानज्झौ । स्तभान । मुषाण । गृहाण । पुषाण । अन्यत्र क्रीणीहि ।

सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङाञ्च ।
व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिध्यति बाहुलकेन ।।

८७—कर्मवत्कर्मणा तुल्यक्रियः । पच्यते ओदनः-स्वयमेव । भिद्यते-काष्ठम् ।

८८—तपस्तपः कर्मकस्यैव । तप्यते तपस्तापसः । अतप्त ।

८९—न दुहस्नुनमां यक्चिणौ । गौः पयो दुग्धे । अदुग्ध । प्रस्नुते गौः । प्रास्नोष्ट । नमते दण्डः । अनंस्त ।

९१—धातोः । अधिकारोऽयम् आतृतीयाध्यायसमाप्तेः ।

९२—तत्रोपपदं सप्तमीस्थम् । कुम्भं करोति इति कुम्भकारः स्तम्बेरमः । कर्णे जपः । सरोजम् ।

९३—कृदतिङ् । कर्त्तव्यम् । करणीयम् । कर्त्ता । कारकः । कार्यम् । कृत्यम् । कृतः । कृतवान् । कृत्वा । उपकृत्य । कर्तुम् ।

९४—वाऽसरूपोऽस्त्रियाम् । विक्षिपः विक्षेप्ता । विक्षेपकः ।

९५—कृत्याः । अधिकारोयम् प्राङ् ण्मुलः ।

९६—तव्यत्तव्यानीयरः । कर्त्तव्यम् । करणीयम् । गन्तव्यम् गमनीयम् । ( वसेस्तव्यत्कर्त्तरि णिच्चं ) वसतीति वास्तव्यः । ( केलिमर उपसंख्यानम् ) पचेलिमा माषाः ।

९७—अचोयत् । चेयम् । जेयम् । ( हनो वा यद्वधश्चवक्तव्यः ) वध्यः । घात्यः ।

९८—पोरदुपधात् । ण्यतोऽपवादः । शप्यम् । लभ्यम् । नानुबन्धकृत-मसारूप्यम् ।

१०९—एतिस्तुशास्वृदृजुषःक्यप् । इत्यः । स्तुत्यः । शिष्यः । वृत्यः । आदृत्यः । जुष्यः । आज्यम् घृतम् ( बाहुलकात् ) ।

११०—ऋदुपधाच्चाक्लृपिचृतेः । वृत्यम् । वृध्यम् । नेह-कल्प्यम्, चर्त्यम् ।

१११—ई च खनः । खेयम् ।

१२०—विभाषा कृवृषोः । कृत्यम् । कार्यम् । वृष्यम् । वर्ष्यम् ।

१२४—ऋहलोर्ण्यत् । कार्यम् । हार्यम् । धार्यम् । वाक्यम् । पाक्यम् ।

१३३—ण्वुल् तृचौ । कर्त्ता । कारकः । कारिका । कर्त्री । कारकम् । कर्तृ । वोढा । वाहकः ।

१३४—नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः । नन्दयतीति नन्दनः । रमते इति रमणः । गृह्णाति इति ग्राही ।

१३५—इगुपधज्ञाप्रीकिरः कः । क्षिपः । बुधः । कृशः । ज्ञः । प्रियः । किरः ।

१३६—आतश्चोपसर्गे । प्रज्ञः प्राज्ञः । प्रस्थः । सुग्लः ।

१३७—पाघ्राध्माधेट्दृशः शः । पिबः । जिघ्रः । धमः । धयः । पश्यः ।

१४१—श्याद्व्यधास्रुसंस्रवतीणवसावहृलिहश्लिषश्वसश्च । अव-श्यायः । दायः । व्याधः । आस्रावः । अत्यायः । अवसायः । अवहारः । अव-लेहः । श्लेषः । श्वासः ।

१४३—विभाषा ग्रहः । ग्रहः, ग्राहः (वार्त्तिक-भवतेश्च) भवः, भावः ।

१४४—गेहे कः । गृह्णाति धान्यादिकम् इति गृहम् । अन्यत्र ग्राहः । ग्रहः ।

१४५—शिल्पिनि ष्वुन् । नर्तकः । नर्तकी । खनकः । खनकी । रजकः रजकी ।

१४६—गस्थकन् । गाथकः । गाथिका ।

इति तृतीयाध्यायस्य प्रथमः पादः

# अथ लघुपाणिनीये तृतीयाध्यायस्य

## द्वितीयः पादः

१—कर्मण्यण् । कुम्भं करोति इति कुम्भकारः । काण्डलावः । वेदाध्यायः । चर्चापाठः ।

३—आतोऽनुपसर्गे कः । अणोऽपवाद. । गोदः । धनदः ।

४—सुपि स्थः । समस्थः । विषमस्थः । द्विपः । आखुरथः । शलभोरथः ।

८—गोपाष्ठक् । कापवादः । सामगः-सामगी । सुरापः-सुरापी ।

९—हरतेरनुद्यमनेऽच् । अणोऽपवादः । अंशहरः । उद्यमने तु भारहारः ।

१६—चरेष्टः । अधिकरणे । कुरुषु चरतीति कुरुचरः-कुरुचरी ।

२०—कृञो हेतुताच्छील्यानुलोम्येषु । यशस्करः । यशस्करी । श्राद्धकरः-श्राद्धकरी । वचनकरः-वचनकरी ।

२८—एजेःखश् । जनमेजयति इति जनमेजयः ।

३८—प्रियवशे वदः खच् । प्रियंवदः । वशंवदः ।

३९—द्विषत्परयोस्तापे । द्विषन्तं परं वा तापयतीति द्विषन्तपः । परन्तपः ।

४०—वाचियमोव्रते । वाचंयमः मौनव्रतीत्यर्थः ।

४८—अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः । अन्तगः अत्यन्तगः । अध्वगः । दूरगः । सर्वगः । अनन्तगः । सर्वत्रगः । पारगः । पन्नगः । उरगः । अन्यत्रापि विहगः ।

५२—लक्षणे जायापत्योष्टक् । जायाघ्नो ना । पतिघ्नी वृषली ।

५६—आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणेख्युन् । अनाढ्यमाढ्यं कुर्वन्ति अनेन इति आढ्यङ्करणम् । सुभगङ्करणम् । स्थूलङ्करणम् । पलितङ्करणमित्यादयः ।

५८—स्पृशोऽनुदके क्विन् । घृतस्पृक् ।

५९—ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्च्युयुजिक्रुञ्चां च । ऋतौ यजति, ऋतुं वा यजति, ऋतुप्रयुक्तो वा यजति इति ऋत्विक् । धृष्णोतीति दधृक् । सृजन्ति तामिति स्रक् । दिशन्ति तामिति दिक् । उष्णिक् । प्राङ् । प्रत्यङ् । उदङ् । युङ् । क्रुङ् ।

६०—त्यदादिषु दृशोऽनालोचने कञ्च । तादृक् । तादृशः । यादृक् । यादृशः । एतादृक् । एतादृशः । कीदृक् । कीदृशः । ईदृक् । ईदृशः । अन्यास्तापि—सदृक् । सदृशः । अन्यादृक् । अन्यादृशः । क्षोऽपि । तादृक्षः । सदृक्षः । अन्यादृक्षः । कीदृक्षः ।

६१—सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप् । सत् । द्युसत् । उपनिषत् । प्रसूः । मित्रद्विट् । मित्रध्रुक् । गोधुक् । वेदवित् । काष्टभित् । रज्जुच्छित् । शत्रुजित् । सेनानीः । ग्रामणीः । नीः । विराट् । सम्राट् । सम्राड् ।

७४—आतो मनिन्क्वनिब्वनिपश्च । चाद् विच् । सुदामा । विश्वपाः ।

७५—अन्येभ्योऽपिदृश्यन्ते । सुशर्मा । प्रातरित्वा । विजावा । अवावा । रोट् । रेट् । सुगण् ।

७६—क्विप् च । उखायाः स्रंसते उखास्रत् । पर्णध्वत् । वाहभ्रट् । चित् ।

७८—सुप्यजातौ णिनिस्ताच्छिल्ये । उष्णभोजी । ब्रह्मवादी ।

८०—व्रते । स्थण्डिलशायी ।

८४—भूते । अधिकारोऽयम्–वर्तमाने लडितियावत् ।

८७—ब्रह्मभ्रूणवृत्रेषु क्विप् । ब्रह्महा । भ्रूणहा । वृत्रहा ।

८९—सुकर्मपापमन्त्रपुण्येषु कृञः । सुकृत् । कर्मकृत् । पापकृत् । पुण्यकृत् । शास्त्रकृत् । भाष्यकृत् ।

९४—दृशेः क्वनिप् । पारं दृष्टवान्–पारदृश्वा । मेरुदृश्वा ।

९७—सप्तम्यां जनेर्डः । सरसिजम् । मन्दुरजः ।

९८—पञ्चम्यामजातौ । संस्कारजः । अदृष्टजः ।

९९—उपसर्गे च संज्ञायाम् । प्रजास्यात् सन्ततौ जने ।

१०१—अन्येष्वपि दृश्यते । अजः । अनुजः । ब्राह्मणजः । परितः खाता परिखा ।

१०२—निष्ठा। स्नातं मया। स्तुतस्त्वयाविष्णुः। विष्णुर्विश्वं कृतवान्।

१०६—लिटः कानज्वा। अग्निं चिक्यानः। चक्राणा पृष्णिम्।

१०७—क्वसुश्च। यो नो अग्ने अरिरिवां अघायुः। ददिवान्। पपिवान्।

११०—लुङ्। अभूत्। अकार्षीत्।

१११—अनद्यतने लङ्। अभवत्। अकरोत्।

११५—परोक्षेलिट्। बभूव। चकार।

११८—लट्स्मे। यजतिस्म युधिष्ठिरः।

१२३—वर्तमाने लट्। भवति, भवतः, भवन्ति। पठति, पठतः, पठन्ति।

१२४—लटः शतृशानचावप्रथमासमानाधिकरणे। पचन्तं चैत्रं पश्य। पचमानं तं पश्य। प्रथमासमानाधिकरण्येऽपि क्वचित्। सन् ब्राह्मणः। (माङ्याक्रोश इतिवाच्यम्) मा जीवन् यः परावज्ञादुःखदग्धोऽपि जीवति।

१२७—तौ सत्। ब्राह्मणस्य कुर्वन् कुर्वाणो वा। करिष्यन् करिष्यमाणोवा।

१३५—तृन्। कर्त्ता कटान्।

१३६—अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच्। अलंकरिष्णुः निराकरिष्णुः। प्रजनिष्णुः। उत्पचिष्णुः। उत्पतिष्णुः। उन्मदिष्णु। रोचिष्णुः। अपत्रपिष्णुः। वर्त्तिष्णुः। वर्धिष्णुः। सहिष्णुः। चरिष्णुः।

१३८—भुवश्च। भविष्णुः। चकारोऽनुक्तसमुच्चयार्थः। भ्राजिष्णुः। क्षयिष्णुरित्यादि।

१३९—ग्लाजिस्थश्च ग्स्नुः। ग्लास्नुः। जिष्णुः। स्थास्नुः चाद्भुवः—भूष्णुः। (दंशेश्छन्दस्युपसंख्यानम्)—दंक्ष्णवः पशवः।

१४०—त्रसिगृधिधृषिक्षिपेःक्नुः। त्रस्नुः। गृध्नुः। धृष्णुः। क्षिप्नुः।

१४१—शमित्यष्टाभ्यो घिनुण्। शमी। तमी। दमी। श्रमी। भ्रमी। क्लमी। प्रमादी। उन्मादी। वा सरूपविधिना उन्मदिष्णुः।

१४८—चलनशब्दार्थादकर्मकाद्युच्। चलनः। चोपनः। कम्पनः। शब्दनः। रवणः। सकर्मकात्तुपठिता विद्याम्।

१५४—लषपतपदस्थाभूवृषहनकमगमशॄभ्यः उकञ् । लाषुकः । पातुकः । पादुकः । स्थायुकः । भावुकः । वर्षुकः । आघातुकः । कामुकः । आगामुकः । शारुकः ।

१५५—जल्पभिक्षकुट्टलुण्टवृङः षाकन् । जल्पाकः । भिक्षाकः । कुट्टाकः । लुण्टाकः । वराकी ।

१५८—स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्यः आलुच् । स्पृहयालुः । पतयालुः । निद्रालुः । तन्द्रालुः । श्रद्धालुः । ( शीङो वाच्यः )—शयालुः ।

१५९—दाधेट्सिशदसदो रुः । दारुः । धारुर्वत्सो मातरम् । सेरुः । शद्रुः । सद्रुः ।

१६०—सृघस्यदः क्मरच् । सृमरः । घस्मरः । अद्मरः ।

१६१—भञ्जभासमिदो घुरच् । भङ्गुरः भासुरः । मेदुरः ।

१६२—विदिभिदिच्छिदेः कुरच् । विदुरः पण्डितः । भिदुरं काष्ठम् । छिदुरम् ।

१६३—इण्नशजिसर्त्तिभ्यः क्वरप् । इत्वरः । इत्वरी । नश्वरः । जित्वरः । सृत्वरः ।

१६७—नमिकम्पिस्म्यजसकमहिंसदीपो रः । नम्रः कम्प्रः । स्मेरः । अजस्रम् । कम्रः । हिंस्रः । दीप्रः ।

१६८—सनाशंसभिक्ष उः । चिकीर्षुः । आशंसुः । भिक्षुः ।

१७४—भियः क्रुक्लुकनौ । भीरुः । भीलुकः । ( क्रुकन्नपि वाच्यः )—भीरुकः ।

१७५—स्थेशभासपिसकसो वरच् । स्थावरः ईश्वरः । भास्वरः । पेस्वरः । कस्वरः ।

१८१—धः कर्मणि ष्ट्रन् । धात्री जनन्यामलकीवसुमत्युपमातृषु ।

१८२—दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे । दान्त्यनेन दात्रम् । नेत्रम् । शस्त्रम् । योत्रम् । योक्त्रम् । स्तोत्रम् । तोत्त्रम् । सेत्रम् । सेक्त्रम् । मेढ्रम् । पत्त्रम् । दंष्ट्रा । नद्ध्री ।

१८४—अर्त्तिलूधूसूखनसहचर इत्रः । अरित्रम् । लवित्रम् । धवित्रम् । सवित्रम् । खनित्रम् । सहित्रम् । चरित्रम् ।

१८७—ञीतः क्तः । ञिक्ष्विदा क्ष्विण्णः । ञिइन्धी इद्धः ।

१८८—मतिबुद्धिपूजार्थेभ्यश्च । राज्ञां मतः, इष्टः । बुद्धः, विदितः । पूजितः, अर्चितः । चकारोऽनुक्तसमुच्चयार्थः । शीलितो रक्षितः क्षान्त आक्रुष्टो जुष्ट इत्यपि ।

इति तृतीयाध्यायस्य द्वितीयः पादः समाप्तः

# अथ तृतीयाध्यायस्य तृतीयः पादः

१—उणादयो बहुलम् (वर्त्तमाने संज्ञायाम्) संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे। कार्याद्विद्यादनूबन्धमेतच्छास्त्रमुणादिषु ॥ कारुः। वायुः। पायुः। स्वादुः। साधुः। आशुः इत्यादयः।

२—भूतेऽपि दृश्यन्ते : वृत्तं तदिति वर्त्म। चरितं तदिति चर्म। भसितं तदिति भस्म।

३—भविष्यति गम्यादयः। गमी ग्रामम्। आगामी। भावी।

१०—तुमुन् ण्वुलौ क्रियायां क्रियार्थायाम्। कृष्णं द्रष्टुं दर्शको वा याति।

११—भाववचनाश्च। यागाय याति। भूतये व्रजति।

१३—लृट् शेषे च। करिष्यामीति व्रजति। भविष्यति। करिष्यति।

१४—लृटः सद्वा। करिष्यन्तं करिष्यमाणं वा पश्य।

१५—अनद्यतने लुट्। लृटोऽपवादः। श्वो भोक्ता। भविता।

१६—पदरुजविशस्पृशो घञ्। पद्यते असौ पादः। रुजति असौ रोगः। विशति असौ वेशः। स्पृशति इति स्पर्शः।

१७—सृ स्थिरे। सरति कालान्तरमिति सारः। (व्याधिमत्स्यबले चेति वाच्यम्) सारो बलम्। अतिसारो व्याधिः। विसारो मत्स्यः।

१८—भावे। पाकः। त्यागः। रागः।

१९—अकर्त्तरि च कारके संज्ञायाम्। रज्यत्यस्मिन्निति रङ्गः। प्रास्यते इति प्रासः।

२१—इङश्च। अचोऽपवादः। अध्यायः। उपेत्यास्मादधीयते इति उपाध्यायः। उपाध्यायी। (शॄ वायुवर्णनिवृतेषु) शारोवायुः। शारो वर्णः। निशारो निवृतम् आवरणम्।

२२—उपसर्गे रुवः। अपोऽपवादः। संरावः। आरावः।

२४—श्रिणीभुवोऽनुपसर्गे। श्रायः। नायः। भावः उपसर्गे तु प्रणयः, प्रभवः, प्रश्रयः।

२७—प्रे द्रुस्तुस्रुवः। प्रद्रावः। प्रस्तावः। प्रस्रावः।

२९—उन्न्योर्ग्रः। उद्गारः। निगारः। अन्यत्र गरः।

३०—कृ धान्ये। उत्कारो निकारो धान्यस्य।

४१—निवासचितिशरीरोपसमाधानेष्वादेश्च कः। काशीनिकायः। अकायमग्निम् चिन्वीत। चीयते अस्मिन् अस्थ्यादिकमिति कायः। गोमयनिकायः। अन्यत्र चयः।

५६—एरच्। चयः। जयः। क्षयः। (भयादीनामुपसंख्यानम्) भयम्। वर्षम्।

५७—ऋदोरप्। घञोऽपवादः। करः। गरः। शरः। यवः। स्तवः। लवः। पवः।

५८—ग्रहवृदृनिश्चिगमश्च। घञोरपवादः। ग्रहः, वरः, दरः, निश्चयः, गमः।

६१—व्यधजपोरनुपसर्गे। व्यधः। जपः। उपसर्गेतु अव्याधः, उपजापः।

६२—स्वनहसोर्वा। स्वनः, स्वानः, हसः, हासः उपसर्गेतु प्रस्वानः। प्रहासः।

७४—निपानमाहावः। आहावस्तु निपानं स्यात् उपकूपजलाशये (अमरः)।

८८—ड्वितः क्त्रिः। पाकेन निर्वृत्तम् पक्त्रिमम्। उप्त्रिमम्। कृत्रिमम्।

८९—ट्वितोऽथुच्। वेपथुः। श्वयथुः क्षवथुः।

९०—यजयाचयतविच्छप्रच्छरक्षोनङ्। यज्ञः। याच्ञा। यत्नः। विश्नः। प्रश्नः। रक्ष्णः।

९१—स्वपो नन्। स्वप्नः।

९२—उपसर्गे घोः किः। प्रदिः। प्रधिः। अन्तर्द्धिः। उपाधिः।

९३—कर्मण्यधिकरणे च। जलानि धीयन्ते अस्मिन्निति जलधिः। शरधिः।

९४—स्त्रियांक्तिन्। घञजपामपवादः। कृतिः। चितिः। स्मृतिः। मतिः। स्तुतिः। स्फातिः (मुद्रास्फीतिस्तु प्रामादिकम् एव)। (श्रुयजिषिस्तुभ्यः करणे) श्रूयते अनया इति श्रुतिः। इष्टिः। स्तुतिः। (संपदादिभ्यः क्विप्) संपत्। (क्तिन्नपीष्यते) सम्पत्तिः। विपत्तिः।

९७—ऊतियूतिजूतिसातिहेतिकीर्त्तयश्च। ऊतिः। यूतिः। जूतिः। सातिः। हेतिः। कीर्तिः।

९८—व्रजयजोर्भावे क्यप्। व्रज्या। इज्या। (क्तिनोपवादः)।

९९—संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः। समजन्त्यस्यामिति समज्या सभा। निषद्या। निपत्या। मन्या। विद्या। सुत्या। शय्या। भृत्या। इत्या।

१००—कृञः श च। क्रिया। कृत्या। कृतिः।

१०१—इच्छा। इच्छा। (परिचर्यापरिसर्यामृगयाऽटाट्यानामुपसंख्यानम्) परिचर्या। परिसर्या। मृगया। अटाट्या।

१०२—अ प्रत्ययात्। चिकीर्षा। पुत्रकाम्या। लोलूया। कण्डूया।

१०३—गुरोश्च हलः। (क्तिनोऽपवादः) कुण्डा। हुण्डा। ईहा। ऊहा। अगुरौतु शक्तिः। हलादन्यत्र च नीतिः।

१०४—षिद्भिदादिभ्योऽङ्। जरा। त्रपा। भिदा। छिदा। कृपा।

१०५—चिन्तिपूजिकथिकुम्बिचर्चश्च। चिन्ता। पूजा। कथा। चर्चा। कुम्बा।

१०६—आतश्चोपसर्गे। (क्तिनोऽपवादः) प्रदा। उपदा। प्रधा। उपधा। श्रद्धा।

१०७—ण्यासश्रन्थो युच्। कारणा। हारणा। आसना। श्रन्थना।

११३—कृत्यल्युटो बहुलम्। स्नानीयं चूर्णम्। दानीयो विप्रः।

११४—नपुंसके भावे क्तः। हसितम्। सहितम्। जल्पितम्।

११५—ल्युट् च। हसनम्। जल्पनम्।

११७—करणाधिकरणयोश्च। इध्मप्रव्रश्चनः कुठारः। गोदोहनी स्थाली।

११८—पुंसि संज्ञायां घः प्रायेण। दन्ताश्छाद्यन्ते अनेन इति दन्तच्छदः। प्रच्छदः। आकरः। आलयः।

११९—गोचरसंचरवहव्रजव्यजापणनिगमाश्च। गावश्चरन्ति अस्मिन्निति गोचरो देशः। संचरते अनेनेति संचरः। वहन्ति अनेन वहः। व्रजन्ति तेन व्रजः। व्यजन्ति तेन व्यजः। पण्यतेऽस्मिन्नापणन्त इत्यापणः। निगच्छन्ति तस्मिन्निति निगमः।

१२०—अवे तॄस्त्रोर्घञ्। अवतारः कूपादेः। अवस्तारो यवनिका।

१२१—हलश्च। रमन्ते योगिनोऽस्मिन्निति रामः। अपामार्गः। वेदः। मार्गः। लेखः।

१२२—**अध्यायन्यायोद्यावसंहाराधारावायाश्च ।** अध्यायः । न्यायः । उद्यावः । संहारः । आधारः । आवायः ।

१२४—**जालमानायः ।** आनीयन्ते मत्स्यादयोऽस्मिन्निति आनायः जालमित्यर्थः ।

१२६—**इषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् ।** इषत्करः दुष्करः सुकरो-वाकटो भवता ।

१३१—**वर्तमानसामीप्ये वर्त्तमानवद्वा ।** कदागतोसि ? अयमागच्छामि ।

१३९—**लिङ्निमित्ते लङ् क्रियातिपत्तौ ।** सुवृष्टिश्चेदभविष्यत्तदा सुभिक्षमभविष्यत ।

१४०—**भूतेच ।**

१५६—**हेतुहेतुमतोर्लिङ् ।** कृष्णं नमेच्चेत् सुखं यायात् ।

१५८—**समानकर्तृकेषुतुमुन् ।** इच्छति भोक्तुम् । वष्टि भोक्तुम् । वाञ्छति भोक्तुम् वा ।

१६१—**विधिनिमन्त्रणामन्त्रणाधीष्ठसम्प्रश्नप्रार्थनेषु लिङ् ।** भवेत् ।

१६२—**लोट् च ।** भवतु ।

१६३—**प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च ।** त्वया कटः कर्त्तव्यः करणीयः कार्यो वा अथवा त्वं कटं कुरु ।

१६७—**कालसमयवेलासु तुमुन् ।** कालो भोक्तुम् । समयो भोक्तुम् ।

१६९—**अर्हे कृत्यतृचश्च ।** चाल्लिङ् । भवता कन्यावोढव्या, वाह्या, वहनीया वा । भवान् कन्या वहेत् इति वा ।

१७०—**आवश्यकाधमर्ण्ययोर्णिनिः ।** अवश्यङ्कारी । शतं दायी ।

१७१—**कृत्याश्च ।** अवश्यं हरिः सेव्य. । शतं देयम् ।

१७२—**शकि लिङ्च ।** त्वं भारं वहेः । त्वयाभारोवोढव्यः ।

१७३—**आशिषि लिङ्लोटौ ।** भूयात् । भवतात् । चिरंजीव्यात् जीवताद्वा ।

१७५—**माङिलुङ् ।** मा भवान् भूत् । माकार्षीत् ।

१७६—**स्मोत्तरे लङ् च ।** मास्म भवद् भूद्वा । मास्मकरोत् कार्षीद्वा ।

इति तृतीयाध्यायस्य तृतीयः पादः ।

# अथ तृतीयाध्यायस्य चतुर्थः पादः

१—**धातुसम्बधे प्रत्ययाः** । वसन् ददर्श । सोमयाज्यस्य पुत्रो भविता । कृतः कटः श्वो भविता । भावि कृत्यमासीत् । गोमानासीत् भविता वा ।

२१—**समानकर्तृकयोः पूर्वकाले** । (क्त्वा) । क्त्वातु अव्ययकृतो भावे । भुक्त्वा व्रजति ! समानकर्तृकाः वा—स्नात्वा, भुक्त्वा पीत्वा दत्त्वा व्रजति । विष्णुं नत्वा स्तौति ! मुखं व्यादाय स्वपिति । नेत्रे निमील्य हसति ।

२२—**आभीक्ष्ण्ये णमुल् च** । स्मारं स्मारं स्मृत्वा स्मृत्वा वा नमति शिवम् । पायं पायं, भोजं भोजं, गामं गामं, गमं गमं, लम्भं लम्भं, लाभं लाभम् ।

२३—**न यद्यनाकाङ्क्षे** । यद्यय भुङ्क्ते ततः पचति । साकाङ्क्षेतु यदय भुक्त्वा व्रजति अधीत एव ततः परम् ।

३०—**यावति विन्दजीवोः** । यावद्वेदं भुङ्क्ते । यावज्जीवमधीते विप्रः ।

४७—**उपदंशस्तृतीयायाम्** । मूलकोपदंशं भुङ्क्ते मूलकेनोपदंशम् ।

६७—**कर्त्तरि कृत्** । कारकः, कर्त्ता । नन्दनः । ग्राही । पचः ।

६८—**भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा** । भवतीति भव्यः । भव्य मनेन वा । गायतीति गेयः माणवकः साम्नाम्, गेयानि सामानि वा । प्रवचनीयो गुरुः स्वाध्यायस्य, गुरुणा स्वाध्याय इति वा । इत्यादयः ।

६९—**लः कर्मणि च भावे चाकर्मकेभ्यः** । आनन्दोऽनुभूयते चैत्रेण तथा मया च । आनन्द मनुभवति चैत्रः, आनन्द मनुभवसि त्वम्, आनन्द मनुभवाम्यहम् । त्वया, मया, अन्यैश्च भूयते । त्वं भवसि । अहं भवामि । अन्यो भवति ।

७०—**तयोरेव कृत्यक्तखलर्थाः** । एधितव्यम् एधनीयं त्वया मया अन्यैश्च ! चेतव्यः चयनीयोवा धर्मस्त्वया मया देवदत्तेन वा । स्नातं त्वया मया रामेण च । स्तुतस्त्वया, मया, अन्यैश्च विष्णुः । ईषत्करः सुकरः दुष्करः कटः त्वया, मया, अन्यैश्च ।

७१—**आदि कर्मणि क्तः कर्त्तरि च** । प्रकृतः कटं देवदत्तः । प्रकृतः कटो देवदत्तेन । प्रस्वेदितः चैत्रः । प्रस्वेदितं चैत्रेण । आषितो देवदत्तः । आसितं तेन । इदमेषामासितम् । यातो देवदत्तो ग्रामम्-यातो देवदत्तेन ग्रामः । यातम् देवदत्तेन । भुक्तः ओदनः तेन । तेन भुक्तम् ।

७२—**गत्यर्थाकर्मकाश्लिषशीङ्स्थासवसजनरुहजीर्य्यतिभ्यश्च** । गतो देवदत्तो ग्रामम् । गतो देवदत्तेन ग्रामः । गतं देवदत्तेन । अकर्मकेभ्य, ग्लानो

भवान्। ग्लानं भवता। आसितोभवान् आसितं भवता। उप गुरुं भवान् उप गुरुः भवता उपशयितो गुरुं भवान्-उपशयितः गुरुः भवता। उपशयितं भवता! उपस्थितो गुरुं भवान्-उपस्थितो गुरु भंवता। उपस्थितम् भवता। उपासितो गुरुं भवान् उपासितो गुरुः भवता। उपासितम् भवता। अनुषितः गुरुं भवान्-अनुषितः गुरु भंवता। अनुषितम् भवता। अनुजातः माणवकः माणविकाम्-अनुजाता माणवकेन माणविका। अनुजातं माणवकेन्। आरूढः वृक्षं भवान्। आरूढः वृक्षः भवता। आरूढम् भवता। अनुजीर्णो वृषलीं देवदत्त :—अनुजीर्णा वृषली देवदत्तेन। अनुजीर्णम् देवदत्तेन।

७६ क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः।

७७ —लस्य। अधिकारोयम्।

७८—तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिड्वहिमहिङ्भवति, भवतः, भवन्ति। भवसि, भवथः भवथ। भवामि, भवावः, भवामः। एधते, एधेते, ऐधन्ते। एधसे, एधेथे, एधध्वे। ऐधे, एधावहे, एधामहे। एवमन्येषुलकारेषु यथा साध्यम्।

७९—टित आत्मनेपदानां टेरे। एधते इत्यादिपूर्वमुदाहृतम्।

८०—थासः से। एधसे। पचसे। पेचिषे। पक्तासे। पक्ष्यसे। एधांचक्रिषे इत्यादयः।

८१—लिटस्तझयोरेशिरेच्। पेचे, पेचिरे। लेभे, लेभिरे। एधांचक्रे, एधांचक्रिरे।

८२—परस्मैपदानां णलतुसुस्थलथुसणल्वमाः। बभूव, बभूवतुः, बभूवुः। बभूविथ, बभुवथुः, बभूव। बभूव, बभूविव, बभूविम।

८३—विदो लटोवा। वेद, विदतुः, विदुः। वेत्थ, विदथुः, विद। वेद, विद्व, विद्म। पक्षेवेत्ति, वित्तः, विदन्ति। वेत्सि, वित्थः, वित्थ। वेद्मि, विद्वः, विद्मः।

८४—ब्रुवः पञ्चानामादित आहो ब्रुवः। आह, आहतुः, आहुः। आत्थ, आहथुः पक्षे ब्रवीति, ब्रूतः, ब्रुवन्ति। ब्रवीषि, ब्रूथ।

८५—लोटो लङ्वत्। भवताम्। भवतम्, भवत। भवाव, भवाम।

८६—एरुः। भवतु भवन्तु।

८७—सेर्ह्यपिच्च। लुनीही। पुनीहि।

८९—मेर्निः। उत्वलोपयोरपवादः। भवानि। पचानि।

९०—आमेतः। एधताम् एधेताम्, एधन्ताम्। पचताम्, पचेताम्, पचन्ताम्।

९१—सवाभ्यां वामौ। आमोपवादः। एधस्व, एधध्वम्। पचस्व, पचध्वम्।

९२—आडुत्तमस्य पिच्च। भवानि, भवाव, भवाम। एधै, एधावहै, एधामहै। करवाणि, करवाव, करवाम। करवै, करवावहै, करवामहै।

९३—एत ऐ। एधै, एधावहै, एधामहै।

९९—नित्यं ङितः। अभवाव। अभवाम। भवेव, भवेम। अभूव, अभूम।

१००—इतश्च। अभवत्। भवेत्। भूयात्। अभूत्। अभविष्यत्।

१०१—तस्थस्थमिपां तान्तन्तामः। अभवताम्, अभवतम्। अभवत। अभवम्। अपाक्ताम्, अपाक्तम्, अपाक्त, अपाक्षम्।

१०२—लिङः सीयुट्। एधेत, एधेयाताम्, एधेरन्, एधिषीष्ट, एधिषीयास्ताम्, एधिषीरन्।

१०३—यासुट् परस्मैपदेषूदात्तो ङिच्च। भवेत्, भूयात्। कुर्यात्। क्रियात्।

१०४-किदाशिषि। भूयात्। स्तुयात्। इज्यात्। जागर्यात्।

१०५—झस्य रन्। झोन्तापवादः। एधेरन्। एधिषीरन्। कृषीरन्।

१०६—इटोऽत्। एधेय। पचेय। कृषीय।

१०७—सुट्तिथोः। एधिषीष्ट। एधिषीयास्ताम्। एधिषीरन्।

१०८—झेर्जुस्। झोन्तापवादः। भवेयुः, कुर्य्युः।

१०९—सिजभ्यस्तविदिभ्यश्च। अकार्षुः, अहार्षुः, अबिभयुः, अजागरुः, अविदुः।

११०—आतः। अपुः, अदुः, अधुः।

१११—लङः शाकटायनस्यैव। अयुः, अयान्, अवुः, अवान्।

११२—द्विषश्च। अद्विषुः-अद्विषन्।

११३—तिङ् शित् सार्वधातुकम्। भवति। नयति। स्वपिति। पचन्। पचमानः।

११४-आर्धधातुकं शेषः। भविता, भवितुम्। लविता-लवितुम्।

११५—लिट् च। बभूविथ। पेचिथ। जग्ले। मम्ले।

११६—लिङाशिषि। एधिषीष्ट। लवीषीष्ट।

इति लघुपाणिनीये
तृतीयाध्यायस्य चतुर्थः पादः समाप्तः।
समाप्तश्च तृतीयाध्यायः।

# अथ चतुर्थाध्यायस्य प्रथमपादः

१. ङ्याप्प्रातिपदिकात् । अधिकारोऽयमापञ्चमाध्यायसमाप्तेः ।

२. स्वौजसमौट्छष्टाभ्यांभिस्ङेभ्यांभ्यस्ङसिभ्यांभ्यस्ङसोसाम्ङ्योस्सुप् । कुमारी, कुमार्यौ, कुमार्यः । कुमारीम्, कुमार्यौ, कुमारीः । कुमार्या, कुमारीभ्याम्, कुमारीभिः । कुमार्यै, कुमारीभ्याम्, कुमारीभ्यः । कुमार्याः, कुमारीभ्याम्, कुमारीभ्यः । कुमार्याः, कुमार्योः, कुमारीणाम् । कुमार्याम्, कुमार्योः, कुमारीषु । एवं गौरी, शार्ङ्गरवी । रमा, रमे, रमाः । रमाम्, रमे, रमाः । रमया, रमाभ्याम्, रमाभिः । रमायै, रमाभ्याम्, रमाभ्यः । रमायाः, रमाभ्याम्, रमाभ्यः । रमायाः, रमयोः, रमाणाम् । रमायाम्, रमयोः, रमासु । एवं वहुराजा, कारीषगन्ध्या । दृषद्, दृषदौ, दृषदः । दृषदम्, दृषदौ, दृषदः । दृषदा, दृषद्भ्याम्, दृषद्भिः । दृषदे, दृषद्भ्याम्, दृषद्भ्यः । दृषदः, दृषद्भ्याम्, दृषद्भ्यः । दृषदः, दृषदोः, दृषदाम् । दृषदि दृषदोः, दृषत्सु । रामः, रामौ, रामाः-इत्यादि ।

३. स्त्रियाम् । अधिकारोऽयं समर्थानामिति यावत् ।

४. अजाद्यतष्टाप् । अजा । एडका । अश्वा । चटका । मूषिका । बाला । वत्सा । होडा । मन्दा । विलाता । * संभस्त्राजिनशणपिण्डेभ्यः फलात् * संफला । भस्त्रफला । अजिनफला । शणफला । पिण्डफला । * त्रिफला द्विगौ * त्रिफला । * सदच्काण्डप्रान्तशतकेभ्यः पुष्पात् * पाककर्णेति ङीषोऽपवादः । सत्पुष्पा । प्राक्पुष्पा । प्रत्यक्पुष्पा । काण्डपुष्पा । प्रान्तपुष्पा । शतपुष्पा । एकपुष्पा । * शूद्रा चामहत्पूर्वा जातिः * शूद्रा । पुंयोगे शूद्री । महत्पूर्वा तु महाशूद्री । क्रुञ्चा । उष्णिहा । देवविशा । ज्येष्ठा । कनिष्ठा । मध्यमेति पुंयोगेऽपि । कोकिला जातावपि । * मूलान्नञः * अमूला ।

५. ऋन्नेभ्यो ङीप् । कर्त्री । दण्डिनी । हस्तिनी ।

६. उगितश्च । पचन्ती, भवन्ती । भवती । प्राची, प्रतीची, उदीची, अवाची ।

१०. न षट्स्वस्रादिभ्यः । पञ्च । चतस्रः ।

१४. अनुपसर्जनात् । अधिकारोऽयं यूनस्तिरिति यावत् ।

१९. टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः । टापोऽपवादः । कुरुचरी । अनुपसर्जनादित्येव । नेह :—बहुकुरुचरा । नदट्-नदी । सौपर्णेयी । ऐन्द्री । औत्सी । ऊरुद्वयसी । ऊरुदघ्नी । ऊरुमात्री । पञ्चतयी । आक्षिकी । लावणिकी । यादृशी । ईत्वरी । * ताच्छीलिके णेऽपि * चौरी । * नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसंख्यानम् * स्त्रैणी । पौंस्नी । शाक्तीकी । आढ्यङ्करणी । तरुणी । तलुनी ।

२०. वयसि प्रथमे । कुमारी । * वयस्यचरम इति वाच्यम् * वधूटी । चिरण्टी । कन्याया न । कन्यायाः कनीन चेति निर्देशात् । कन्या ।

२१. द्विगोः । त्रिलोकी । पञ्चपूली ।

३२. अन्तर्वत्पतिवतोर्नुक् । अन्तर्वत्नी । पतिवत्नी ।

३३. पत्युर्नो यज्ञसंयोगे । वसिष्ठस्य पत्नी ।

३४. विभाषा सपूर्वस्य । गृहस्य पतिः, गृहपत्नी, गृहपतिः ।

३५. नित्यं सपत्न्यादिषु । समानः पतिरस्याः सा, सपत्नी । एकपत्नी । वीरपत्नी । भ्रातृपत्नी । पुत्रपत्नी ।

४१. षिद्गौरादिभ्यश्च । नर्तकी, खनकी । गौरी । * अनडुहः स्त्रियामाम् वा वाच्यः * अनडुही, अनड्वाही । * पिप्पल्यादयश्च * पिप्पली । हरीतकीत्यादि ।

४२. जानपदकुण्डगोणस्थलभाजनागकालनीलकुशकामुककबराद्वृत्त्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णानाच्छादनायोविकारमैथुनेच्छाकेशवेशेषु । जानपदी, वृत्तिश्चेत् । अन्यत्र ङीप् जानपदी । कुण्डी, अमत्रं चेत् । कुण्डान्या । गोणी, आवपनं चेत् । गोणान्या । स्थली, अकृत्रिमा भूमिः । स्थलान्या : भाजी, श्राणा । भाजान्या । नागी, स्थूला । नागान्या । काली, वर्णः । कालान्या । नीली, अनाच्छादनं चेत् । नीलाऽन्या । * नीलादोषधौ * नीली ओषधिः । * प्राणिनि च * नीली गौः । * संज्ञायां वा * नीली । नीला कुशी, अयोविकारः । कुशान्या । कामुकी, मैथुनेच्छा चेत् । कामुकान्या । कबरी, केशवेशविशेषः । कबरान्या ।

४३. शोणात्प्राचाम् । शोणी, शोणा ।

४४. वोतो गुणवचनात् । मृद्वी, मृदुः । पट्वी, पटुः । * खरुसंयोगोपधाश्च * खरुः पतिंवरा कन्या । पाण्डुः ।

४५. बह्वादिभ्यश्च। बह्वी। बहुः। * कृदिकारादक्तिनः * रात्री, रात्रिः। * सर्वतोऽक्तिन्नर्थादित्येके * शकटी। शकटिः, क्तिन्नर्थासु, अजननिः। पद्धती, पद्धतिः।

४८. पुंयोगादाख्यायाम्। गोपस्य स्त्री, गोपी। * पालकान्तान्न * गोपालिका। अश्वपालिका। * सूर्याद्देवतायां चाब्वाच्यः * सूर्यस्य स्त्री देवता, सूर्या। सूरी कुन्ती।

४९. इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक्। इन्द्राणी। वरुणानी। भवानी। शर्वाणी। मृडानि। * हिमारण्ययोर्महत्त्वे * महद्धिमं हिमानी। महदरण्यमरण्यानी। * यवाद्दोषे * दुष्टो यवो यवानी। * यवनाल्लिप्याम् * यवनानां लिपिर्यवनानी। * मातुलोपाध्याययोरानुग्वा * मातुलानी, मातुली। उपाध्यायानी, उपाध्यायी। * आचार्यादणत्वं च * आचार्यानी। * अर्यक्षत्रियाभ्यां वा स्वार्थे * अर्याणी, अर्या। क्षत्रियाणी, क्षत्रिया, पुंयोगे तु, अर्यी। क्षत्रियी।

५४. स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्। अतिकेशी, अतिकेशा। चन्द्रमुखी, चन्द्रमुखा। संयोगोपधात्तु, सगुल्फा। स्वाङ्गं त्रिधा :—* अद्रवं मूर्त्तिमत्स्वाङ्गं प्राणिस्थमविकारजम् * नेह :—सुस्वेदा। सुज्ञाना। सुमुखा शाला। सुशोफा। * अतत्स्थं तत्र दृष्टं च * सुकेशी, सुकेशा वा रथ्या। * तेन चेत्तत्तथायुतम् * सुस्तनी, सुस्तना वा प्रतिमा।

५५. नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च। तुङ्गनासिकी, तुङ्गनासिका। तिलोदरी, तिलदरा। बिम्बोष्ठी, बिम्बोष्ठा। दीर्घजङ्घी, दीर्घजङ्घा। समदन्ती, समदन्ता। चारुकर्णी, चारुकर्णा। तीक्ष्णशृङ्गी, तीक्ष्णशृङ्गा। * पुच्छाच्च * सुपुच्छा। * कबरमणिविषशरेभ्यो नित्यम् * कबरपुच्छी मयूरी : मणिपुच्छी। विषपुच्छी। शरपुच्छी। * उपमानात्पक्षाच्च पुच्छाच्च * उलूकपक्षी शाला। उलूकपुच्छी सेना।

५६. न क्रोडादिबह्वचः। कल्याणक्रोडा, कल्याणखुरा। सुभगा। सुजघना।

५७. सहनञ्विद्यमानपूर्वाच्च। सकेशा। विद्यमाननासिका।

५८. नखमुखात्संज्ञायाम्। शूर्पणखा। गौरमुखा। संज्ञाभावे ताम्रमुखी, चन्द्रमुखी कन्या।

६२. सख्यशिश्वीति भाषायाम्। सखी। अशिश्वी। आधेनवो धुनयन्तामशिश्वीः।

६३. **जातेरस्त्रीविषयादयोपधात्** । * आकृतिग्रहणा जातिः * तटी । कुक्कुटी । सूकरी । * लिङ्गानां च न सर्वभाक् । सकृदाख्यातनिर्ग्राह्या * वृषली । * गोत्रं च चरणैः सह * औपगवी । कठी । बह्वृची । ब्राह्मणीत्यत्र तु शार्ङ्गरवादित्वान् ङीन् । * योपधप्रतिषेधे हयगवयमुकयमनुष्यमत्स्यानामप्रतिषेधः * हयी । गवयी । मुकयी । मनुषी । मत्सी ।

६५. **इतो मनुष्यजातेः** । दाक्षी । औदमेयी ।

६६. **ऊङुतः** । कुरूः । ब्रह्मबन्धूः । नेह :--अध्वर्युः । * अप्राणिजातेश्चारज्ज्वादीनामुपसंख्यानम् * अलाबूः । कर्कन्धूः । अलाब्वा । कर्कन्ध्वा । प्राणिजातेस्तु, कृकवाकुः । नेह :--रज्जुः । हनुः ।

६७. **बाह्वन्तात्संज्ञायाम्** । भद्रबाहूः । असंज्ञायान्तु, वृत्तबाहुः ।

६८. **पङ्गोश्च** । पङ्गूः । * श्वशुरस्योकाराकारलोपश्च * श्वश्रूः ।

६९. **ऊरूत्तरपदादौपम्ये** । करभोरूः । नागनासोरूः ।

७०. **संहितशफलक्षणवामादेश्च** । संहितोरूः । शफोरूः । लक्षणोरूः । वामोरूः । * सहितसहाभ्यां चेति वक्तव्यम् * सहितोरूः । सहोरूः ।

७२. **संज्ञायाम्** । कद्रूः । कमण्डलूः ।

७३. **शार्ङ्गरवाद्यञो ङीन्** । शार्ङ्गरवी । वैदी । जातेरित्यनुवृत्तेः पुंयोगे ङीषेव । * नृनरयोर्वृद्धिश्च * नारी ।

७४. **यङश्चाप्** । आम्बष्ठ्या । कारीषगन्ध्या । * षाद्यञश्चाप् वाच्यः * पौतिमाष्या ।

७६. **तद्धिताः** । अधिकारोऽयमापञ्चमाध्यायपरिसमाप्तेः ।

७७. **यूनस्तिः** । युवतिः । युवतीति तु, यौतेः शत्रन्तान्ङीपि ।

८२. **समर्थानां प्रथमाद्वा** । इदं पदत्रयमधिक्रियते प्राग्दिश इति यावत् ।

८३. **प्राग्दीव्यतोऽण्** । तेन दीव्यतीत्यतः प्रागणधिक्रियते ।

८४. **अश्वपत्यादिभ्यश्च** । वक्ष्माणस्य ण्यस्यापवादः । अश्वपतेरपत्यादि, आश्वपतम् । गाणपतम् ।

८५. **दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः** । दैत्यः । अदितेरादित्यस्य वादित्यः । प्राजापत्यः । * यमाच्चेति काशिकायाम् * याम्यः । * पृथिव्या ञाञौ * पार्थिवा, पार्थिवी । * देवाद्यञञौ * दैव्यम्, दैवम् । * बहिषष्टिलोपो यञ्च * बाह्यः । * ईकक् च * बाहीकः । * स्थाम्नोऽकारः * । अश्वत्थामा । * लोम्नोऽपत्येषु बहुष्वकारः * बाह्वादीञोऽपवादः । उडुलोमाः, उडुलोमान् । द्वित्वैकत्व-

योस्तु, औडुलोमिः, औडुलोमी। * गोरजादिप्रसङ्गे यत् * गव्यम्। अनजादिप्रत्ययप्रसङ्गे तु, गोरूप्यम्। गोमयम्।

८६. उत्सादिभ्योऽञ्। औत्सः। * अग्निकलिभ्यां ढग् वक्तव्यः * अग्नेरपत्यादि, आग्नेयम्। कालेयम्।

८७. स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्। स्त्रैणः। पौंस्नः। वत्यर्थे तु न स्त्री पुंवच्चेति ज्ञापकात्। स्त्रीवत्। पुंवत्।

८८. द्विगोर्लुगनपत्ये। पञ्चसु कपालेषु संस्कृतः पुरोडाशः, पञ्चकपालः। द्वौ वेदावधीते, द्विवेदः। त्रिवेदः। अपत्ये तु, द्वयोर्मित्रयोरपत्यं द्वैमित्रिः। अजादेरेव। नेह :--पञ्चगर्गरूप्यम्, पञ्चगर्गमयम्।

९५. अत इञ्। दाक्षिः।

९६. बाह्वादिभ्यश्च। बाहविः। औडुलोमिः।

९७. सुधातुरकङ् च। सुधातुरपत्यं सौधातकिः। * व्यासवरुडनिषादचण्डालबिम्बानाञ्चेति वक्तव्यम् * वैयासकिः। वारुडकिः नैषादकिः। चाण्डालकिः। बैम्बकिः।

९८. गोत्रे कुञ्जादिभ्यश्च्फञ्। कौञ्जायन्यः। ब्राध्नायन्यः।

९९. नडादिभ्यः फक्। नाडायनः। गोत्र इत्येव। नाडिः।

१००. हरितादिभ्योऽञः। हारितायनः कैन्दासायनः।

१०१. यञिञोश्च। गार्ग्यायणः, वात्स्यायनः। दाक्षायणः।

१०५. गर्गादिभ्यो यञ्। गार्ग्यः। वात्स्यः।

११२. शिवादिभ्योऽण्। शिवस्यापत्यं शैवः। गाङ्गः! तिकादौ शुभ्रादौ च पाठात् फिञ्ढकावपि। गाङ्गायनिः। गाङ्गेयः।

११४. ऋष्यन्धकवृष्णिकुरुभ्यश्च। वासिष्ठः, वैश्वामित्रः। श्वाफल्कः। वासुदेवः, आनिरुद्धः। नाकुलः, साहदेवः।

११५. मातुरुत्संख्यासंभद्रपूर्वायाः। द्वैमातुरः, षाण्मातुरः। सांमातुरः। भाद्रमातुरः वैमात्रेयस्तु शुभ्रादित्वाड् ढकि।

११६. कन्यायाः कनीन च। कानीनो व्यासः, कर्णश्च।

१२०. स्त्रीभ्यो ढक्। वैनतेयः। बाह्वादित्वात्सौमित्रिः शिवादित्वात्सापत्नः।

१२७. कुलटाया वा। कौलटिनेयः। कौलटेयः।

१२८. चटकाया ऐरक्। चाटकैरः। * चटकस्येति वाच्यम् * चटकस्य चाटकैरः। स्त्रियामपत्ये लुग्वक्तव्य * चटका।

१२९. गोधाया ढ्रक्। गौधेरः। शुभ्रादित्वात्पक्षे ढक्। गौधेयः।

१३०. आरगुदीचाम्। गोधारः। रका सिद्धे आकारविधानमन्यतोऽपि विधानार्थम्। जडस्य जाडारः। पाण्डारः।

१३२. पितृष्वसुश्छण्। अणोऽपवादः। पैतृष्वस्रीयः।

१३३. ढकि च लोपः। पैतृष्वसेयः।

१३४. मातृष्वसुश्च। मातृष्वस्रीयः, मातृष्वसेयः।

१३७. राजश्वशुराद्यत्। * राज्ञो जातावेवेति वाच्यम् * राजन्यः क्षत्रियः। राजनोऽन्यः श्वशुर्यः।

१३८. क्षत्राद्घः। क्षत्रियः। जातावित्येव। क्षात्रिरन्यः।

१३९. कुलात्खः। कुलीनः! उत्तरसूत्रेऽपूर्वपदादिति लिङ्गात्तदन्तादपि। आढ्यकुलीनः।

१४१. महाकुलादञ्खञौ। माहाकुलः, माहाकुलीनः, महाकुलीनः।

१४२. दुष्कुलाड्ढक्। दौष्कुलेयः, दुष्कुलीनः।

१४३. स्वसुश्छः। स्वसुरपत्यं स्वस्रीयः।

१४४. भ्रातुर्व्यच्च। अणोऽपवादः। भ्रातृव्यः, भ्रात्रीयः।

१४५. व्यन्सपत्ने। भ्रातृव्यः शत्रुः।

१४६. रेवत्यादिभ्यष्ठक्। रैवतिकः।

१५०. फाण्टाहृतिमिमताभ्यां णफिञौ। फाण्टाहृतः, फाण्टाहृतायनिः। मैमतः, मैमतायनिः।

१५१. कुर्वादिभ्योण्यः। कौरव्याः ब्राह्मणाः। वावदूक्याः। * सम्राजः क्षत्रिये * साम्राज्यः। साम्राजोऽन्यः।

१६२. अपत्यं पौत्रप्रभृति गोत्रम्। गर्गस्यापत्यं पौत्रप्रभृति, गार्ग्यः। वात्स्यः।

१६३. जीवति तु वंश्ये युवा। गर्गस्य यदपत्यं चतुर्थादि, गार्ग्यायणः।

१६८. जनपदशब्दात्क्षत्रियादञ्। पाञ्चालः। ऐक्ष्वाकः। वैदेहः। * क्षत्रियसमानशब्दाज्जनपदात्तस्य राजन्यपत्यवत्* पञ्चालानां राजा, पाञ्चालः। वैदेहः। मागधः। * पुरोरण् वक्तव्यः * पौरवः। * पाण्डोर्ड्यण् * पाण्ड्यः।

१७४. ते तद्राजाः। संज्ञासूत्रमिदम्।

१७५. कम्बोजाल्लुक्! कम्बोजः। कम्बोजौ! * कम्बोजादिभ्य इति वक्तव्यम् * चोलः। शकः। केरलः। यवनः।

१७६. स्त्रियामवन्तिकुन्तिकुरुभ्यश्च। अवन्ती। कुन्ती। कुरूः।

इति लघुपाणिनीये चतुर्थाध्यायस्य प्रथमःपादः समाप्तः।

# अथ चतुर्थाध्यायस्य द्वितीयपादः

१. तेनरक्तं रागात् । कषायेण रक्तं वस्त्रं काषायम् ।

२. लाक्षारोचनाट्ठक् । लाक्षिकः । रौचनिकः । * शकलकर्दमाभ्यामुपसंख्यानम् * शाकलिकः । कार्दमिकः । आभ्यामणपीति वृत्तिः । शाकलः । कार्दमः । * नील्या अन् * नील्यारक्तं नीलम् । * पीतात्कन् * पीतकम् । * हरिद्रामहारजनाभ्यामञ् * हारिद्रम् । माहारजनम् ।

३. नक्षत्रेण युक्तः कालः । पुष्येण युक्तं पौषमहः । पौषी रात्रिः ।

७. दृष्टं साम । वसिष्ठेन दृष्टं वासिष्ठं साम । वैश्वामित्रम् । * अस्मिन्नर्थेऽण् डिद्वा वक्तव्यः * औशनम् । औशनसम् ।

८. कलेर्ढक् । कालेयम् ।

९. वामदेवाड् ड्यड्ड्यौ । वामदेव्यम् ।

१०. परिवृतो रथः । वस्त्रैः परिवृतो वास्त्रो रथः । काम्बलः ।

११. पाण्डुकम्बलादिनिः । पाण्डुकम्बली ।

१२. द्वैपवैयाघ्रादञ् । अणोऽपवादः द्वैपेन परिवृतो रथो द्वैपः । वैयाघ्रः ।

१४. तत्रोद्धृतममत्रेभ्यः । शराव उद्धृतः, शाराव ओदनः ।

१५. स्थण्डिलाच्छयितरि व्रते । स्थण्डिले शेते, स्थाण्डिलो भिक्षुः ।

१६. संस्कृतं भक्षाः । भ्राष्ट्रे संस्कृताः, भ्राष्ट्रा यवाः । अष्टासु कपालेषु संस्कृतः पुरोडाशोऽष्टाकपालः ।

१७. शूलोखाद्यत् । अणोऽपवादः । शूले संस्कृतम्, शूल्यं मांसम् । उख्यम् ।

१८. दध्नष्ठक् । दाधिकम् ।

१९. उदश्वितोऽन्यतरस्याम् । औदश्वित्कः, औदश्वितः ।

२०. क्षीराड् ढञ् । क्षैरेयी यवागूः ।

२१. सास्मिन् पौर्णमासीति । पौषी पौर्णमासी अस्मिन्, पौषो मासः । माघः ।

२२. आग्रहायण्यश्वत्थाट् ठक् । अणोऽपवादः । अग्रं हायनमस्या आग्रहायणी, सास्मिन् पौर्णमासीति, आग्रहायणिको मासः । अश्वत्थेन युक्ता पौर्णमासी, अश्वत्थोऽस्मिन्, आश्वत्थिको मासः ।

२३. **विभाषा फाल्गुनीश्रवणाकार्त्तिकीचैत्रीभ्यः** । पक्षेऽण् । फाल्गुनिकः, फाल्गुनः । श्रावणिकः, श्रावणः । कार्त्तिकिकः, कार्त्तिकः । चैत्रिकः, चैत्रः ।

२४. **सास्य देवता** : इन्द्रो देवतास्य, ऐन्द्रं हविः । पाशुपतम् । बार्हस्पत्यम् । ऐन्द्रो मन्त्रः ।

२६. **शुक्राद्घन्** । अणोऽपवादः । शुक्रियम ।

२७. **अपोनप्त्रपान्नप्तृभ्यां घः** । अपोनप्त्रियम् । अपान्नप्त्रियम् ।

२८. **छ च** । अपोनप्त्रीयम् । अपान्नप्त्रीयम् । * शतरुद्राद्घश्च * शतं रुद्रा देवतास्य; शतरुद्रियम्, शतरुद्रीयम् ।

२९. **महेन्द्राद्घाणौ च** । चाच्छः । महेन्द्रियम्, माहेन्द्रम्, महेन्द्रीयम् ।

३०. **सोमाट् ट्यण्** । सौम्यम । सौमी ऋक् ।

३१. **वायृतुपित्रुषसो यत्** । वायव्यम् । ऋतव्यम् । पित्र्यम् । उषस्यम् ।

३२. **द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छ च** । चाद्यत् । द्यावापृथिवीयम्, द्यावापृथिव्यम् । शुनासीरीयम्, शुनासीर्यम् । मरुत्वतीयम्, मरुत्वत्यम् । अग्नीषोमीयम्, अग्नीषोम्यम् । वास्तोष्पतीयम् । वास्तोष्पत्यम् । गृहमेधीयम्, गृहमेध्यम् ।

३३. **अग्नेर्ढक्** । अणोऽपवादः । आग्नेयोऽष्टाकपालः ।

३६. **पितृव्यमातुलमातामहपितामहाः** । * पितुर्भ्रातरि व्यत् * पितुर्भ्राता, पितृव्यः । * मातुर्डुलच् * मातुर्भ्राता, मातुलः । * मातृपितृभ्यां पितरि डामहच् * मातुः पिता, मातामहः । पितुः पिता, पितामहः । * मातरि षिच्च * मातामही । पितामही । * अवेर्दुग्धे सोढदूसमरीसचो वक्तव्या च * अवेर्दुग्धम्, अविसोढम् । अविदूसम् । अविमरीसम् । * तिलान्निष्फलात्पिञ्जपेजौ * तिलपिञ्जः । तिलपेजः । * पिञ्जश्छन्दसि डिच्च * तिल्पिञ्जः ।

३७. **तस्य समूहः** । काकानां समूहः, काकम् । वाकम् ।

३८. **भिक्षादिभ्योऽण्** । भैक्षम् । गर्भिणीनां गार्भिणम् । युवतीनां यौवनम् । शत्रन्तात्तु, यौवतम् ।

४३. **ग्रामजनबन्धुभ्यस्तल्** । ग्रामता । जनता । बन्धुता । * गजसहायाभ्यां चेति वक्तव्यम् * गजता । सहायता । * अह्नः खः क्रतौ * अहीनः । आह्नोऽन्यः । * पर्श्वा णस् वक्तव्यः * पर्शूनां समूहः, पार्श्वम् ।

४६. **चरणेभ्यो धर्मवत्** । काठकम् । छान्दोग्यम् ।

१४७. **अचित्तहस्तिधेनोष्ठक्** : साक्तुकम् । धैनुकम् ।

४८. **केशाश्वाभ्यां यञ्छावन्यतरस्याम्** । पक्षे ठगणौ । कैश्यम्, कैशिकम् । अश्वीयम्, आश्वम् ।

४९. **पाशादिभ्यो यः** । पाश्या । तृण्या । धूम्या । वन्या । वात्या ।

५०. **खलगोरथात्** । खल्या । गव्या । रथ्या ।

५९. **तदधीते तद्वेद** । व्याकरणमधीते, वेद वा, वैयाकरणः ।

६१. **क्रमादिभ्यो वुन्** । क्रमकः । पदकः । शिक्षकः । मीमांसकः ।

६३. **वसन्तादिभ्यष्ठक्** । वासन्तिकः । अथर्वाणमधीते, आथर्वणिकः ।

६४. **प्रोक्ताल्लुक्** । पाणिनीयः । पाणिनीया ।

६५. **सूत्राच्च कोपधात्** । अष्टावध्यायाः परिमाणमस्य, अष्टकं पाणिनेः सूत्रम्, तदधीते, वेद वा, अष्टकः । अष्टकौ । अष्टकाः ।

६७. **तदस्त्यस्मिन्देशे तन्नाम्नि** । उदम्बराः सन्ति अस्मिन्देशे औदम्बरः ।

६८. **तेन निर्वृत्तम्** । कुशाम्बेन निर्वृत्ता, कौशाम्बी नगरी ।

६९. **तस्य निवासः** । शिबीनां निवासो देशः, शैबः ।

७०. **अदूरभवश्च** । विदिशाया अदूरभवं नगरं वैदिशम् ।

८१. **जनपदे लुप्** । पञ्चालानां निवासो जनपदः, पञ्चालाः । कुरवः । अङ्गाः । वङ्गाः । कलिङ्गाः ।

८२. **वरणादिभ्यश्च** । वरणानामदूरभवं नगरं वरणाः ।

८३. **शर्कराया वा** । शर्करा, शार्करम् ।

८४. **ठक्छौ च** । कुमुदादौ वराहादौ च पाठाट्ठच्ककौ । शार्करिकम्, शर्करीयम्, शर्करिकम्, शार्करकम् ।

८५. **नद्यां मतुप्** । इक्षुमती ।

८६. **मध्वादिभ्यश्च** । मधुमान् ।

८७. **कुमुदनडवेतसेभ्यो ड्मतुप्** । कुमुद्वान् । नड्वान् । वेतस्वान् । * महिषाच्चेति वक्तव्यम् । * महिष्मान् देशः ।

८८. **नडशादाड्ड्वलच्** । नड्वलः । शाद्वलः ।

९२. **शेषे** । अयमधिकारो विधिश्च । चक्षुषा गृह्यते, चाक्षुषं रूपम् । श्रावणः शब्दः औपनिषदः पुरुषः । दृषदि पिष्टाः, दार्षदाः सक्तवः । उलूखले क्षुण्णः, औलू

खलो यावकः । अश्वैरुह्यते, आश्वो रथः । चातुरं शकटम् । चतुर्दश्यां दृश्यते, चातुर्दशं रक्षः ।

९३. **राष्ट्रावारपाराद्घखौ** । राष्ट्रियः । अवारपारीणः । * अवारपाराद्विगृहीतादपि विपरीताच्चेति वक्तव्यम् * अवारीणः । पारीणः । पारावारीणः ।

९४. **ग्रामाद्यखञौ** । ग्राम्यः । ग्रामीणः ।

९६. **कुलकुक्षिग्रीवाभ्यः श्वास्यलङ्कारेषु** । कौलेयकः श्वा । कौलोऽन्यः । कौक्षेयकोऽसिः । कौक्षोऽन्य । ग्रैवेयकोऽलङ्कारः । ग्रैवोऽन्यः ।

९७. **नद्यादिभ्यो ढक्** । नादेयम् । माहेयम् । वाराणसेयम् ।

९८. **दक्षिणापश्चात्पुरसस्त्यक्** । दाक्षिणात्यः पाश्चात्यः । पौरस्त्यः ।

१०१. **द्युप्रागपागुदक्प्रतीचो यत्** । दिव्यम् । प्राच्यम । उदीच्यम् । प्रतीच्यम् ।

१०४. **अव्ययात्त्यप्** । * अमेहक्वतसित्रेभ्य एव * अमात्यः । इहत्यः । क्वत्यः । ततस्त्यः । तत्रत्यः । * त्यब्नेर्ध्रुव इति वक्तव्यम् * नित्यः । * निसो गते * निर्गतो वर्णाश्रमेभ्यो निष्ट्यश्चाण्डालादिः । * अरण्याण्णः * आरण्याः सुमनसः । * दूरादेत्यः * दूरेत्यः । * उत्तरादाहञ् * औत्तराहः ।

१०७. **दिक्पूर्वपदादसंज्ञायां ञः** । अणोऽपवादः । पौर्वशालः । पूर्वेषुकामशमः ।

११४. **वृद्धाच्छः** । शालीयः । मालीयः । तदीयः ।

११५. **भवतष्ठक्छसौ** । भावत्कः, भवदीयः । शत्रन्तात्तु, भावतः ।

११६. **काश्यादिभ्यष्ठञ्ञिठौ** । काशिकी, काशिका । वैदिकी, वैदिका । * आपदादिपूर्वपदात्कालान्तात् * आपत्कालिकी, आपत्कालिका ।

१२९. **अरण्यान्मनुष्ये** । णस्यापवादः । * पथ्यध्यायन्यायविहारमनुष्यहस्तिष्विति वाच्यम् * आरण्यकः पन्थाः, अध्यायः, न्यायः, विहारः, मनुष्यः, हस्ती वा । * वा गोमयेषु * आरण्यकाः, आरण्या वा गोमयाः ।

१४३. **पर्वताच्च** । पर्वतीयः ।

इति लघुपाणिनीये चतुर्थाध्यायस्य द्वितीयपादः समाप्तः ।

# अथ लघुपाणिनीये चतुर्थाध्यायस्य तृतीयपादः

१. **युष्मदस्मदोरन्यतरस्यां खञ्च** । चाच्छः : पक्षेऽण् । युष्मदीयः । अस्मदीयः ।

२. **तस्मिन्नणि च युष्माकास्माकौ** । यौष्माकीणः । आस्माकीनः । यौष्माकः । आस्माकः ।

३. **तवकममकावेकवचने** । तावकीनः, तावकः । मामकीनः, मामकः । त्वदीयः । मदीयः ।

८. **मध्यान्मः** । मध्यमः । * आदेश्च * आदिमः । * अवोधसोर्लोपश्च * अवमः । अधमः ।

९. **अ साम्प्रतिके** । मध्यो वैयाकरणः । मध्यं दारु ।

१०. **द्वीपादनुसमुद्रं यञ्** । द्वैप्यम्, द्वैप्या ।

११. **कालाट्ठञ्** । मासिकम् । सांवत्सरिकम् । सायंप्रातिकः । पौनःपुनिकः ।

१२. **श्राद्धे शरदः** । ऋत्वणोऽपवादः । शारदिकं श्राद्धम् ।

१५. **श्वसस्तुट् च** । शौवस्तिकम्, श्वस्त्यम्, श्वस्तनम् ।

१६ **संधिवेलाद्यृतुनक्षत्रेभ्योऽण्** । सन्धिवेलायां भवं सान्धिवेलम् । सान्ध्यम् । ग्रैष्मम् । तैषम् । पौषम् । * संवत्सरात्फलपर्वणोः * सांवत्सरं फलं पर्व वा । अन्यत्सांवत्सरिकम् ।

१७. **प्रावृष एण्यः** । प्रावृषेण्यः ।

१८. **वर्षाभ्यष्ठक्** । वर्षासु साधु, वार्षिकं वासः ।

२०. **वसन्ताच्च** । वासन्तिकम् ।

२१. **हेमन्ताच्च** । हैमन्तिकम् ।

२३. **सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च** । सायन्तनम् । चिरन्तनम् । प्राह्णेतनम । प्रगेतनम् । दोषातनम् । दिवातनम् । *चिरपरुत्परारिभ्यस्त्नो वक्तव्यः । चिरत्नम् । परुत्नम् । परारित्नम् * अग्रादिपश्चाड्डिमच् * अग्रिमम् । आदिमम् । पश्चिमम् । * अन्ताच्च * अन्तिमम् ।

२५. **तत्र जातः** । स्रुघ्ने जातः, स्रौघ्नः । औत्सः । राष्ट्रियः--- इत्यादि ।

३४. **श्रविष्ठाफल्गुन्यनुराधास्वातितिष्यपुनर्वसुहस्तविशाखाषाढाबहुलाल्लुक्** । श्रविष्ठासु जातः, श्रविष्ठः । फल्गुनः । अनुराधः । स्वातिः तिष्यः । पुनर्वसुः । हस्तः । विशाखः । अषाढः । बहुलः । * चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसंख्यानम् * चित्रायां जाता, चित्रा । रेवती । रोहिणी * फल्गुन्यषा-

ढाभ्यां टानौ वक्तव्यौ * फल्गुनी । अषाढा । * श्रविष्ठाषाढाभ्यां छण् वक्तव्यः* अस्त्रियामपि । श्राविष्ठीयः । आषाढीयः ।

३९. प्रायभवः । स्रुघ्ने प्रायेण भवति, स्रौघ्नः ।

४०. उपजानूपकर्णोपनीवेष्ठक् । औपजानुकः । औपकर्णिकः । औपनीविकः ।

४१. संभूते । स्रुघ्ने संभवति, स्रौघ्नः ।

४२ .कोशाड्ढञ् । कौशेयम् वस्त्रम् ।

४३. कालात्साधुपुष्प्यत्पच्यमानेषु । हेमन्ते साधुर्हैमन्तः प्राकारः । वसन्ते पुष्यन्ति, वासन्त्यः कुन्दलताः । शरदि पच्यन्ते, शारदाः शालयः ।

४४. उप्ते च । हेमन्ते उप्यन्ते, हैमन्ता यवाः ।

४७. देयमृणे । मासे देयमृणं मासिकम् ।

५३. तत्र भवः । स्रुघ्ने भवः, स्रौघ्नः । राष्ट्रियः

५४. दिगादिभ्यो यत् । दिश्यम् । वर्ग्यम् ।

५५. शरीरावयवाच्च । दन्त्यम् । कण्ठ्यम् ।

५६. दृतिकुक्षिकलशिवस्त्यहेर्ढञ् । दार्त्तेयम् । कौक्षेयम् । कालशेयम् । वास्तेयम् । आस्तेयम् । आहेयम् ।

५७. ग्रीवाभ्योऽण् च । ग्रैवेयम्, ग्रैवम् ।

५८. गम्भीराञ्ञ्यः । गाम्भीर्यम् ।

७३. अणृगयनादिभ्यः । ठञादेरपवादः । आर्गयनः । औपनिषदः । वैयाकरणः ।

७४. तत आगतः । स्रुघ्नादागतः स्रौघ्नः ।

७७. विद्यायोनिसम्बन्धेभ्यो वुञ् । औपाध्यायकः । पैतामहकः ।

७९. पितुर्यच्च । चाट्ठञ् । पित्र्यम् । पैत्रिकम् ।

८३. प्रभवति । हिमवतः प्रभवति, हैमवती गङ्गा । दारदी सिन्धुः ।

८४. विदूराञ्ञ्यः । अणोऽपवादः । विदूरात्प्रभवति, वैदूर्यो मणिः ।

८५. तद्गच्छति पथिदूतयोः । स्रुघ्नं गच्छति, स्रौघ्नः पन्था दूतो वा ।

८७. अधिकृत्यकृते ग्रन्थे । शारीरकमधिकृत्य कृतो ग्रन्थः, शारीरकीयः ।

८८. शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः । अणोऽपवादः । शिशुक्रन्दमधिकृत्य कृतो ग्रन्थः, शिशुक्रन्दीयः । यमसभीयः । किरातार्जुनीयम् । इन्द्रजननीयम् । विरुद्धभोजनीयम् ।

८९. सोऽस्य निवासः । स्रौघ्नः । माथुरः ।

९०. अभिजनश्च । स्रौघ्नः ।

१०१. तेन प्रोक्तम् । पाणिनिना प्रोक्तं पाणिनीयम् । आपिशलम्, काशकृत्स्नम् ।

११५. उपज्ञाते । पाणिनिनोपज्ञातम्, पाणिनीयम ।

११६. कृते ग्रन्थे । वररुचिना कृतो वाररुचो ग्रन्थः ।

११७. संज्ञायाम् । मक्षिकाभिः कृतं माक्षिकं मधु ।

१२०. तस्येदम् । उपगोरिदमौपगवम् । * वहेस्तुरणिट् च * संवोढुः स्वम्, सांवहित्रम् । * अग्नीधः शरणे रण् भं च * अग्नीधः स्थानमाग्नीध्रम् । तात्स्थ्यात्सोऽप्याग्नीध्रः । * समिधामाधाने षेण्यण् * सामिधेन्यो मन्त्रः । सामिधेनी ऋक् ।

१२१. रथाद्यत् । रथ्यं चक्रम् ।

१३४. तस्य विकारः । अश्मनो विकार आश्मः । भास्मनः । मार्त्तिकः ।

१४५. गोश्च पुरीषे । गोः पुरीषं गोमयम् ।

१४६. पिष्टाच्च । पिष्टमयं भस्म ।

१४७. संज्ञायां कन् । पूपोऽपूपः पिष्टकः स्यात् ।

१४८. व्रीहेः पुरोडाशे । व्रीहिमयः पुरोडाशः । व्रैहमन्यत् ।

१५७. उष्ट्राद् वुञ् । प्राण्यञोऽपवादः । औष्ट्रकः ।

१५८. उमोर्णयोर्वा । औमकम्, औमम् । और्णकम्, और्णम् ।

१५९. एण्या ढञ् । ऐणेयम् । एणस्य तु, ऐणम् ।

१६०. गोपयसोर्यत् । गव्यम् । पयस्यम् ।

१६१. द्रोश्च । द्रुर्वृक्षस्तस्य विकारोऽवयवो वा, द्रव्यम् ।

१६३. फले लुक् । आमलक्याः फलमामलकम् ।

१६४ प्लक्षादिभ्योऽण् । विधानसामर्थ्यान्न लुक् । प्लाक्षम् । नैयग्रोधम् ।

१६५. जम्ब्वा वा । जाम्बवम् । जम्बु ।

१६६. लुप् च । जम्बूः । * फलपाकशुषामुपसंख्यानम् * व्रीहयः । मुद्गाः । * पुष्पमूलेषु बहुलम् * मल्लिकायाः पुष्पं मल्लिका । जात्याः पुष्पं जाती । विदार्या मूलं विदारी । बहुलग्रहणान्नेह :—पाटलानि पुष्पाणि । साल्वानि मूलानि । क्वचिल्लुक् । अशोकम् करवीरम् ।

१६७. हरीतक्यादिभ्यश्च । हरीतक्याः फलानि, हरीतक्यः ।

इति लघुपाणिनीये चतुर्थाध्यायस्य तृतीयःपादः समाप्तः ।

# अथ चतुर्थाध्यायस्य चतुर्थपादः ।

१. प्राग्वहतेष्ठक् । तद्वहतीत्यतः प्रागधिकारोऽयम् ।

२. तेन दीव्यति खनति जयति जितम् । अक्षैर्दीव्यति, आक्षिकः । अभ्र्यां खनति, आभ्रिकः । अक्षैर्जयति, आक्षिकः । जितमाक्षिकम् ।

३. संस्कृतम् । दध्ना संस्कृतं दाधिकम् । मारोचिकम् ।

५. तरति । उडुपेन तरति, औडुपिकः ।

६. गोपुच्छाठ्ठञ् । गौपुच्छिकः ।

८. चरति । हास्तिकः । शाकटिकः । दाधिकः ।

१२. वेतनादिभ्यो जीवति । वेतनेन जीवति, वैतनिकः । धानुष्कः ।

२२. संसृष्टे । दध्ना संसृष्टं दाधिकम् ।

२३. चूर्णादिनिः । चूर्णैः संसृष्टाश्चूर्णिनोऽपूपाः ।

२४. लवणाल्लुक् । लवणः सूपः । लवणं शाकम् ।

३०. प्रयच्छति गर्ह्यम् । द्विगुणार्थं द्विगुणं प्रयच्छति, द्वैगुणिकः । त्रैगुणिकः । * वृद्धेर्वृधुषिभावो वक्तव्यः * वार्धुषिकः ।

३४. शब्ददर्दुरं करोति । शब्दं करोति, शाब्दिकः । दार्दुरिकः ।

४१. धर्मं चरति । धार्मिकः । * अधर्माच्चेति वक्तव्यम् * आधर्मिकः ।

४५. सेनाया वा । सैन्याः, सैनिकाः ।

५७. प्रहरणम् । असिः प्रहरणमस्य, आसिकः । धानुष्कः ।

५८. परश्वधाच्च । पारश्वधिकः ।

५९. शक्तियष्ट्योरीकक् । शाक्तीकः । याष्टीकः ।

६०. अस्ति नास्ति दिष्टं मतिः । अस्ति परलोक इति मतिर्यस्य, आस्तिकः । नास्तिकः । दैष्टिकः ।

६१. शीलम् । अपूपभक्षणं शीलमस्य, आपूपिकः ।

६२. छत्रादिभ्यो णः । छात्रः । गुरोर्दोषापवरण छत्रं शीलंयस्य ।

७३. निकटे वसति । नैकटिको भिक्षुः ।

७४. आवसथात् ष्ठल् । आवसथिकः । आवसथिकी ।

७५. प्राग्घिताद्यत् । तस्मै हितमित्यतः प्राग्यदधिक्रियते ।

७६. तद्वहति रथयुगप्रासङ्गम् । रथं वहति, रथ्यः । युग्यः । प्रासङ्ग्यः ।

७७. धुरो यड्ढकौ । धुर्यः । धौरेयः ।

७८. खः सर्वधुरात् । सर्वधुरीणः ।

८६. वशं गतः । वश्यः परेच्छानुचारी ।

९०. गृहपतिना संयुक्ते ञ्यः । गार्हपत्योऽग्निः ।

९१. नौवयोधर्मविषमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमितसंमितेषु । नावा तार्यं नाव्यम् । वयसा तुल्यो वयस्यः । धर्मेण प्राप्यं धर्म्यम् । विषेण वध्यो विष्यः । मूलेनानाम्यं मूल्यम् । मूलेन समो मूल्यः । सीतया समितं सीत्यं क्षेत्रम् । तुलया संमितं तुल्यम् ।

९२. धर्मपथ्यर्थन्यायादनपेते । धर्मादनपेतं धर्म्यम् । पथ्यम् । अर्थ्यम् । न्याय्यम् ।

९४. उरसोऽण् च । औरसः, उरस्यः पुत्रः ।

९५. हृदयस्य प्रियः । हृद्यो देशः ।

९८. तत्र साधुः । अग्रे साधुः, अग्र्यः । सामन्यः । कर्मण्यः । शरण्यः ।

१०४. पथ्यतिथिवसतिस्वपतेर्ढञ् । पाथेयम् । आतिथेयम् । वासतेयी रात्रिः । स्वापतेयं धनम् ।

१०५. सभाया यः : सभ्यः ।

१०७. समानतीर्थे वासी । समाने, तीर्थे गुरौ वसतीति, सतीर्थ्यः ।

१०८. समानोदरे शयित ओ चोदात्तः । समानोदर्यो भ्राता ।

१०९. सोदराद्यः । सोदर्यः ।

१११. पाथोनदीभ्यां ड्यण् । तमु त्वा पाथ्यो वृषा । चनो दधीत नाद्यो गिरो मे ।

११२. वेशन्तहिमवद्भ्यामण् । वैशन्तीभ्यः स्वाहा । हैमवतीभ्यः स्वाहा ।

११३. स्रोतसो विभाषा ड्यड्ड्यौ । पक्षे यत् । स्रोतसि भवः, स्रोत्यः । स्रोतस्यः ।

११४. सगर्भसयूथसनुताद्यन् । यतोऽपवादः । अनुभ्राता सगर्भ्यः । अनुसखा सयूथ्यः । यो नः सनुत्य उत वा जिघत्नु ।

११६. अग्राद्यत् । अग्र्यम् ।

११७. घच्छौ च । चाद्यत् । अग्रियम् । अग्रीयम् ।

इति लघुपाणिनीये चतुर्थाध्यायस्य चतुर्थःपादः समाप्तः ।

॥ चतुर्थाध्यायश्च समाप्तः ॥

# अथ चतुर्थाध्यायस्य चतुर्थपादः ।

१. प्राग्वहतेष्ठक् । तद्वहतीत्यतः प्रागधिकारोऽयम् ।

२. तेन दीव्यति खनति जयति जितम् । अक्षैर्दीव्यति, आक्षिकः । अभ्र्या खनति, आभ्रिकः । अक्षैर्जयति, आक्षिकः । जितमाक्षिकम् ।

३. संस्कृतम् । दध्ना संस्कृतं दाधिकम् । मारोचिकम् ।

५. तरति । उडुपेन तरति, औडुपिकः ।

६. गोपुच्छाट्ठञ् । गौपुच्छिकः ।

८. चरति । हास्तिकः । शाकटिकः । दाधिकः ।

१२. वेतनादिभ्यो जीवति । वेतनेन जीवति, वैतनिकः । धानुष्कः ।

२२. संसृष्टे । दध्ना संसृष्टं दाधिकम् ।

२३. चूर्णादिनिः । चूर्णैः संसृष्टाश्चूर्णिनोऽपूपाः ।

२४. लवणाल्लुक् । लवणः सूपः । लवणं शाकम् ।

३०. प्रयच्छति गर्ह्यम् । द्विगुणार्थं द्विगुणं प्रयच्छति, द्वैगुणिकः । त्रैगुणिकः । * वृद्धेर्वृधुषिभावो वक्तव्यः * वार्धुषिकः ।

३४. शब्ददर्दुरं करोति । शब्दं करोति, शाब्दिकः । दार्दुरिकः ।

४१. धर्मं चरति । धार्मिकः । * अधर्माच्चेति वक्तव्यम् * आधर्मिकः ।

४५. सेनाया वा । सैन्याः, सैनिकाः ।

५७. प्रहरणम् । असिः प्रहरणमस्य, आसिकः । धानुष्कः ।

५८. परश्वधाच्च । पारश्वधिकः ।

५९. शक्तियष्ट्योरीकक् । शाक्तीकः । याष्टीकः ।

६०. अस्ति नास्ति दिष्टं मतिः । अस्ति परलोक इति मतिर्यस्य, आस्तिकः । नास्तिकः । दैष्टिकः ।

६१. शीलम् । अपूपभक्षणं शीलमस्य, आपूपिकः ।

६२. छत्रादिभ्यो णः । छात्रः । गुरोर्दोषापवरण छत्रं शीलंयस्य ।

७३. निकटे वसति । नैकटिको भिक्षुः ।

७४. आवसथात् ष्ठल् । आवसथिकः । आवसथिकी ।

७५. प्राग्घिताद्यत् । तस्मै हितमित्यतः प्राग्यदधिक्रियते ।

७६. तद्वहति रथयुगप्रासङ्गम् । रथं वहति, रथ्यः । युग्यः । प्रासङ्ग्यः ।

७७. धुरो यड्ढकौ । धुर्यः । धौरेयः ।

७८. खः सर्वधुरात् । सर्वधुरीणः ।

८६. वशं गतः । वश्यः परेच्छानुचारी ।

९०. गृहपतिना संयुक्ते ञ्यः । गार्हपत्योऽग्निः ।

९१. नौवयोधर्मविषमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्य-समसमितसंमितेषु । नावा तार्यं नाव्यम् । वयसा तुल्यो वयस्यः । धर्मेण प्राप्यं धर्म्यम् । विषेण वध्यो विष्यः । मूलेनानाम्यं मूल्यम् । मूलेन समो मूल्यः । सीतया समितं सीत्यं क्षेत्रम् । तुलया संमितं तुल्यम् ।

९२. धर्मपथ्यर्थन्यायादनपेते । धर्मादनपेतं धर्म्यम् । पथ्यम् । अर्थ्यम् । न्याय्यम् ।

९४. उरसोऽण् च । औरसः, उरस्यः पुत्रः ।

९५. हृदयस्य प्रियः । हृद्यो देशः ।

९८. तत्र साधुः । अग्रे साधुः, अग्र्यः । सामन्यः । कर्मण्यः । शरण्यः ।

१०४. पथ्यतिथिवसतिस्वपतेर्ढञ् । पाथेयम् । आतिथेयम् । वासतेयी रात्रिः । स्वापतेयं धनम् ।

१०५. सभाया यः : सभ्यः ।

१०७. समानतीर्थे वासी । समाने, तीर्थे गुरौ वसतीति, सतीर्थ्यः ।

१०८. समानोदरे शयित ओ चोदात्तः । समानोदर्यो भ्राता ।

१०९. सोदराद्यः । सोदर्यः ।

१११. पाथोनदीभ्यां ड्यण् । तमु त्वा पाथ्यो वृषा । चनो दधीत नाद्यो गिरो मे ।

११२. वेशन्तहिमवद्भ्यामण् । वैशन्तीभ्यः स्वाहा । हैमवतीभ्यः स्वाहा ।

११३. स्रोतसो विभाषा ड्यड्ड्यौ । पक्षे यत् । स्रोतसि भवः, स्रोत्यः । स्रोतस्यः ।

११४. सगर्भसयूथसनुताद्यन् । यतोऽपवादः । अनुभ्राता सगर्भ्यः । अनुसखा सयूथ्यः । यो नः सनुत्य उत वा जिघत्नु ।

११६. अग्राद्यत् । अग्र्यम् ।

११७. घच्छौ च । चाद्यत् । अग्रियम् । अग्रीयम् ।

इति लघुपाणिनीये चतुर्थाध्यायस्य चतुर्थःपादः समाप्तः ।

॥ चतुर्थाध्यायश्च समाप्तः ॥

# अथ लघुपाणिनीये पञ्चमाध्यायस्य प्रथमपादः

## छयतोरधिकारः

१. प्राक् क्रीताच्छः । तेन क्रीतमित्यतः प्राक् छोऽधिक्रियते ।

२. उगवादिभ्यो यत् । छस्यापवादः । शङ्कव्यं दारु । गव्यम् । हविष्यम् * नाभि नभं च * नभ्योऽक्षः । नभ्यमञ्जनम् । * शुनः सम्प्रसारणं वा च दीर्घत्वम् * शून्यम् । शुन्यम् । * ऊधसोऽनङ् च * ऊधन्यः ।

५. तस्मै हितम् । वत्सेभ्यो हितो वत्सीयो गोधुक् । शङ्कव्यम् । गव्यम् ।

६. शरीरावयवाद्यत् । दन्त्यम् । कण्ठ्यम् । नस्यम् । नाभ्यम् । शीर्षण्यः ।

७. खलयवमाषतिलवृषब्रह्मणश्च । खलाय हितं खल्यम् । यव्यम् । माष्यम् । तिल्यम् । वृष्यम् । ब्रह्मण्यम् । चाद्रथ्या ।

९. आत्मन्विश्वजनभोगोत्तरपदात्खः । आत्मने हितमात्मनीनम् । विश्वजनीनम् । * कर्मधारयादेवेष्यते * नेह :—विश्वजनीयम् । * पञ्चजनादुपसंख्यानम् * पञ्चजनीनम् । * सर्वजनाट्ठञ् खश्च * सार्वजनिकः । सर्वजनीनः । * महाजनाट्ठञ् * माहाजनिकः । मातृभोगीणः । पितृभोगीणः । राजभोगीनः । * आचार्यादणत्वं च * आचार्यभोगीनः ।

१२. तदर्थं विकृतेः प्रकृतौ । अङ्गारेभ्य एतानि, अङ्गारीयाणि काष्ठानि । प्राकारीया इष्टकाः । शङ्कव्यम् ।

१४. ऋषभोपानहोर्ञ्यः । छस्यापवादः । आर्षभ्यो वत्सः । औपानह्यो मुञ्जः । औपानह्यं चर्म ।

१५. चर्मणोऽञ् । वघ्र्यै इदं वाघ्रं चर्म । वारत्रं चर्म ।

१६. तदस्य तदस्मिन् स्यादिति । प्राकार आसां स्यादिति, प्राकारीया इष्टकाः । प्रासादीयं दारु । प्राकारीयो देशः ।

१७. परिखाया ढञ् । पारिखेयी भूमिः ।

१८. प्राग्वतेष्ठञ् । अधिक्रियते ।

१९. आर्हादगोपुच्छसंख्यापरिमाणाट्ठक् । ठञोऽपवादः । नैष्किकम् । पाणिकम् । गोपुच्छसंख्यापरिमाणात्तु ठञेव । गौपुच्छिकम् । षाष्ठिकम् । प्रास्थिकम् ।

२२. संख्याया अतिशदन्ताया: कन् । पञ्चभिः क्रीतः, पञ्चकः । बहुकः । तिशदन्तायास्तु, साप्ततिकः । चात्वारिंशत्कः ।

२३. वतोरिड्वा । तावतिकः, तावत्कः ।

३६. द्वित्रिपूर्वादण् च । चाद्यत् । द्वैशाणम्, द्विशाण्यम्, द्विशाणम् ।

३७. तेन क्रीतम् । गौपुच्छिकम् । साप्ततिकम् । प्रास्थिकम् । नैष्किकम् ।

४०. पुत्राच्छ च । चाद्यत् । पुत्रीयः, पुत्र्यः ।

४१. सर्वभूमिपृथिवीभ्यामणञौ । सर्वभूमेर्निमित्तं संयोग उत्पातो वा, सार्वभौमः । पार्थिवः ।

४२. तस्येश्वरः । सर्वभूमेरीश्वरः, सार्वभौमः । पार्थिवः ।

४३. तत्र विदित इति च । सार्वभौमः । पार्थिवः ।

४४. लोकसर्वलोकाट्ठञ् । लौकिकः । सार्वलौकिकः ।

५७. तदस्य परिमाणम् । प्रस्थं परिमाणमस्य, प्रास्थिको राशिः ।

५८. संख्यायाः संज्ञासङ्घसूत्राध्ययनेषु । पञ्चैव, पञ्चकाः शुकाः । पञ्च परिमाणमस्य, पञ्चकः संङ्घः । अष्टकं पाणिनीयं सूत्रम् । पञ्चकमध्ययनम् । * स्तोमे डविधिः * पञ्चदश मन्त्राः परिमाणमस्य, पञ्चदशः स्तोमः ।

५९. पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम् । पङ्क्तिः । विंशतिः । त्रिंशत् । चत्वारिंशत् । षष्टिः । सप्ततिः । अशीतिः । नवतिः । शतम् ।

६०. पञ्चद्दशतौ वर्गे वा । पञ्च परिणाममस्य, पञ्चद्वर्गः, पञ्चकः । दशत्, दशकः ।

६३. तदर्हति । श्वेतच्छत्रमर्हति, श्वैतच्छत्रिकः ।

६६. दण्डादिभ्यो यत् । दण्ड्यः । अर्घ्यः । वध्यः ।

६९. कडङ्करदक्षिणाच्छ च । कडङ्करं माषमुद्गादितृणमर्हतीति, कडङ्करीयो गौः । कडङ्कर्यः । दक्षिणामर्हति, दक्षिणीयः । दक्षिण्यः ।

७३. संशयमापन्नः । सांशयिकः ।

७५. पथः ष्कन् । पथिकः । पथिकी ।

७६. पन्थो ण नित्यम् । पान्थः । पान्था ।

७८. कालात् । अधिकारोऽयं व्युष्टादिभ्योऽणिति यावत् ।

७९. तेन निर्वृत्तम्। आह्निकम्। मासिकम्।

११५. तेन तुल्यं क्रिया चेद्वतिः। ब्राह्मणेन तुल्यं ब्राह्मणवदधीते।

११६. तत्र तस्येव। मथुरायामिव, मथुरावत्स्रुघ्ने प्राकारः। चैत्रस्येव, चैत्रवन्मैत्रस्य गावः।

११७. तदर्हम्। विधिमर्हति, विधिवत्पूज्यते।

११९. तस्य भावस्त्वतलौ। गोर्भावो गोत्वम्। गोता।

१२०. आ च त्वात्। ब्रह्मणस्त्व इत्यतः प्राक् त्वतलावधिक्रियेते। स्त्रिया भावः, स्त्रैणम्, स्त्रीत्वम्, स्त्रीता।

१२१. न नञ्पूर्वात्तत्पुरुषादचतुरसंगतलवणवटयुधकतरसलसेभ्यः। अपतित्वम्। अपटुत्वम्। अन्यत्र तु बार्हस्पत्यम्। आचतुर्यम्। आसङ्गत्यम्। आलवण्यम्। आवट्यम्। आयुध्यम्। आकत्यम्। आरस्यम्। आलस्यम्।

१२२. पृथ्वादिभ्य इमनिज्वा। पृथोर्भावः, प्रथिमा, पार्थवम्। मृदोर्भावो म्रदिमा, मार्दवम्।

१२३. वर्णदृढादिभ्यः ष्यञ्च। शौक्ल्यम्, शुक्लिमा। दार्ढ्यम्, द्रढिमा। औचिती। याथाकामी।

१२४. गुणवचनब्राह्मणादिभ्यः कर्मणि च। चाद्भावे। जडस्य कर्म,भावो वा जाड्यम्। मौढ्यम्। ब्राह्मण्यम्। * अर्हतो नुम् च * आर्हन्त्यम्। आर्हन्ती। * चतुर्वर्णादीनां स्वार्थे उपसंख्यानम् * चत्वारो वर्णाश्चातुर्वर्ण्यम्। चातुराश्रम्यम्। त्रैस्वर्यम्। षाड्गुण्यम्, सैन्यम्। सान्निध्यम्। सामीप्यम्। औपम्यम्। त्रैलोक्यम्। सार्ववेद्यः। * चतुर्वेदस्योभयपदवृद्धिश्च * चातुर्वैद्यः। चतुर्विद्यस्येति पाठे चतुर्विद्य एव, चातुर्वैद्यः।

१२६. सख्युर्यः। सख्युर्भावः, कर्म वा, सख्यम्। * दूतवणिग्भ्यां च * दूत्यम्। वणिज्यम्। ब्राह्मणादित्वाद्वाणिज्यमपि।

१२७. कपिज्ञात्योर्ढक्। कापेयम्। ज्ञातेयम्।

१२८. पत्यन्तपुरोहितादिभ्यो यक्। सैनापत्यम्। पौरोहित्यम्। * राजाऽसे * राज्ञो भावः, कर्म वा, राज्यम्। समासे तु, आधिराज्यम्।

१३१. इगन्ताच्च लघुपूर्वात्। शौचम्। मौनम्।

१३६. ब्रह्मणस्त्व। छस्यापवादः। ब्रह्मत्वम्।

इति लघुपाणिनीये पञ्चमाध्यायस्य प्रथमः पादः समाप्तः।

# अथ लघुपाणिनीये पञ्चमाध्यायस्य द्वितीयपादः

१. धान्यानां भवने क्षेत्रे खञ्। मुद्गानां भवनं क्षेत्रं, मौद्गीनम्।

२. व्रीहिशाल्योर्ढक्। व्रैहेयम्। शालेयम्।

३. यवयवकषष्टिकाद्यत्। यव्यम्। यवक्यम्। षष्टिक्यम्।

२२. साप्तपदीनं सख्यम्। सप्तभिः पदैरवाप्यते, साप्तपदीनं सख्यम्।

२३. हैयङ्गवीनं संज्ञायाम्। ह्योगोदोहस्य विकारो हैयङ्गवीनं नवनीतम्।

२५. पक्षात्तिः। पक्षस्य मूलं पक्षतिः।

२६. तेन वित्तश्चुञ्चुप्चणपौ। विद्यया वित्तो विद्याचुञ्चुः। विद्याचणः।

२७. विनञ्भ्यां नानाञौ न सह। विना। नाना।

२८. वेः शालच्छङ्कटचौ। विस्तृतं विशालम्। विशङ्कटम्।

२९. सम्प्रोदश्च कटच्। सङ्कटम्। प्रकटम्। उत्कटम्। चाद्विकटम्।

३१. नते नासिकायाः संज्ञायां टीटञ्नाटज्भ्रटचः। नासिकाया नतमवटीटम्। अवनाटम्। अवभ्रटम्। तद्योगान्नासिकाप्यटीटा। पुरुषोऽवटीटः।

३२. नेर्बिडज्बिरीसचौ। निबिडम्। निबिरीसम्।

३३. इनच् पिटच्चिक चि च। * कप्रत्ययचिकादेशौ च वक्तव्यौ * चिकिनम्। चिपिटम्। चिक्कम्। * क्लिन्नस्य चिल् पिल् लश्चास्य चक्षुषि * क्लिन्ने चक्षुषी अस्य, चिल्लः। पिल्लः। * चुल् च * चुल्लः।

३४. उपाधिभ्यां त्यकन्नासन्नारूढयोः। पर्वतस्यासन्नस्थलमुपत्यका। आरूढं स्थलमधित्यका।

३५. कर्मणि घटोऽठच्। कर्मणि घटते, कर्मठः।

३६. तदस्य संजातं तारकादिभ्य इतच्। तारकाः संजाता अस्य, तारकितं नभः।

३७. प्रमाणे द्वयसज्दघ्नञ्मात्रचः। ऊरू प्रमाणमस्य, ऊरुद्वयसम्। ऊरुदघ्नम्। उरुमात्रम्। * प्रमाणे लः * शमः। दिष्टिः। वितस्तिः * द्विगोर्नि-

त्यम् * द्वौ शमौ प्रमाणमस्य, द्विशमम् । * प्रमाणपरिमाणाभ्यां संख्यायाश्चापि संशये मात्रज्वक्तव्यः * शममात्रम् । गस्तमात्रम् । पञ्चमात्रम् । * वत्वन्तात्स्वार्थे द्वयसज्मात्रचौ बहुलम् * तावद्द्वयसम् । तावन्मात्रम् ।

३८. पुरुषहस्तिभ्यामण् च । पुरुषः प्रमाणमस्य, पौरुषम् । पुरुषद्वयसम् । हास्तिनम् । हस्तिद्वयसम् ।

३९. यत्तदेतेभ्यः परिमाणे वतुप् । यत्परिमाणमस्य, यावान् । तावान् । एतावान् ।

४०. किमिदम्भ्यां वो घः । कियान् । इयान् ।

४१. किमः संख्यापरिमाणे डति च । का संख्या येषां कति, कियन्तः ।

४२. संख्याया अवयवे तयप् । पञ्चावयवा अस्य, पञ्चतयं दारु ।

४३. द्वित्रिभ्यां तयस्यायज्वा । द्वयम्, द्वितयम् । त्रयम्, त्रितयम् ।

४४. उभादुदात्तो नित्यम् । उभयम् ।

४८. तस्य पूरणे डट् । एकादशानां पूरणः, एकादशः ।

४९. नान्तादसंख्यादेर्मट् । पञ्चानां पूरणः, पञ्चमः ।

५१. षट्कतिकतिपयचतुरां थुक् । षण्णां पूरणः, षष्ठः । कतिथः । कतिपयथः । चतुर्थः । * चतुरश्छयतावाद्यक्षरलोपश्च * तुर्यः, तुरीयः ।

५४. द्वेस्तीयः । द्वयोः पूरणो द्वितीयः ।

५५. त्रेः सम्प्रसारणं च । तृतीयः ।

५६. विंशत्यादिभ्यस्तमडन्यतरस्याम् । विंशतितमः, विंशः । एकविंशतितमः, एकविंशः ।

५७. नित्यं शतादिमासार्धमाससंवत्सराच्च । शततमः । एकशततमः । मासतमः । अर्धमासतमः । संवत्सरतमः ।

५८. षष्ट्यादेश्चाऽसंख्यादेः । षष्टितमः, सप्ततितमः । संख्यादेस्तु, एकषष्टः, एकषष्टितमः ।

६९. अंशं हारी । अंशको दायादः ।

७०. तन्त्रादचिरापहृते । तन्त्रकः पटः ।

८०. उत्क उन्मनाः । उत्क उत्कण्ठितः ।

८४. श्रोत्रियंश्छन्दोऽधीते : श्रोत्रियः, छान्दसः ।

८५. श्राद्धमनेन भुक्तमिनिठनौ । श्राद्धी, श्राद्धिकः ।

८६. पूर्वादिनिः । पूर्वी ।

८७. सपूर्वाच्च । कृतपूर्वी कटम् । भुक्तपूर्वी भक्तम् ।

८८. इष्टादिभ्यश्च । इष्टमनेन, इष्टी, । अधीती ।

**मत्वर्थीयाः—**

९४. तदस्यास्त्यस्मिन्निति मतुप् । गावोऽस्यास्मिन्वा सन्ति, गोमान् । * गुणवचनेभ्यो मतुपो लुगिष्टः * शुक्लो गुणोऽस्यास्तीति, शुक्लः पटः । कृष्णः ।

९६. प्राणिस्थादातो लजन्यतरस्याम् । चूडालः, चूडावान् । प्राण्यङ्गादेव । नेह :—मेधावान् ।

९९. फेनादिलच् च । चाल्लच् । फेनिलः, फेनलः, फेनवान् ।

१००. लोमादिपामादिपिच्छादिभ्यः शनलचः । लोमशः, लोमवान् । रोमशः, रोमवान् । पामनः । * अङ्गात्कल्याणे * अङ्गना । * लक्ष्म्या अच्च * लक्ष्मणः । * विष्वगित्युत्तरपदलोपश्चाकृतसन्धेः * विषुणः । पिच्छिलः, पिच्छवान् । उरसिलः, उरस्वान् ।

१०२. तपःसहस्राभ्यां विनीनी । तपस्वी । सहस्री ।

१०३. अण् च । तापसः । साहस्रः । * ज्योत्स्नादिभ्य उपसंख्यानम् * ज्यौत्स्नः । तामिस्रः ।

१०६. दन्त उन्नत उरच् । उन्नता दन्ता सन्त्यस्य, दन्तुरः ।

१०७. ऊषसुषिमुष्कमधो रः । ऊषरः । सुषिरः । मुष्करः । मधुरः । * रप्रकरणे खमुखकुञ्जेभ्य उपसंख्यानम् * खरः । मुखरः । कुञ्जरः । * नगपांसुपाण्डुभ्यश्च * नगरम् । पांसुरः । पाण्डुरः । * कच्छ्वा ह्रस्वत्वञ्च * कच्छुरः ।

१०८. द्युद्रुभ्यां मः । द्युमः । द्रुमः ।

१०९. केशाद्वोऽन्यतरस्याम् । केशवः, केशिकः, केशी, केशवान् । * अन्येभ्योऽपि दृश्यते * मणिवो नागविशेषः । हिरण्यवः । * अर्णसो लोपश्च * अर्णवः ।

११२. रजःकृष्यासुतिपरिषदो वलच् । रजस्वला स्त्री । कृषीवलः । आसुतीवलः शौण्डिकः । परिषद्वलः । * अन्येभ्योऽपि दृश्यते * भ्रातृवलः । शत्रुवलः ।

११३. दन्तशिखात्संज्ञायाम् । दन्तावलो हस्ती । शिखावलः केकी ।

११४. ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः । ज्योत्स्ना । तमिस्रा । शृङ्गिणः । ऊर्जस्वी । ऊर्जस्वलः । गोमी । मलिनः । मलीमसः ।

११५. अत इनिठनौ । दण्डी, दण्डिकः ।

११६. व्रीह्यादिभ्यश्च । व्रीही, व्रीहिकः ।

११७. तुन्दादिभ्य इलच्च । तुन्दिलः, तुन्दी, तुन्दिकः, तुन्दवान् । * स्वाङ्गाद् विवृद्धौ * विवृद्धौ कर्णौ यस्य स कर्णिलः, कर्णी, कर्णिकः, कर्णवान् ।

१२१. अस्मायामेधास्रजो विनिः । यशस्वी, यशस्वान् । मायी, मायावान् । स्रग्वी । * आमयस्योपसंख्यानं दीर्घश्च * आमयावी । * शृङ्गवृन्दाभ्यामारकन् * शृङ्गारकः । वृन्दारकः । * फलबर्हाभ्यामिनच् * । फलिनः । बर्हिणः । * हृदयाच्चालुरन्यतरस्याम् * हृदयालुः, हृदयी, हृदयिकः, हृदयवान् । * शीतोष्णतृप्रेभ्यस्तदसहने * शीतं न सहते, शीतालुः । उष्णालुः । तृप्रालुः । * हिमाच्चेलुः * हिमेलुः * । * बलादूलः * बलूलः । * वातात्समूहे च * वातं न सहते, वातस्य समूहो वा, वातूलः । * तप् पर्वमरुद्भ्याम् * पर्वतः । मरुत्तः ।

१२३. ऊर्णाया युस् । ऊर्णायुः ।

१२४. वाचो ग्मिनिः । वाग्मी ।

१२५. आलजाचटौ बहुभाषिणि । * कुत्सित इति वक्तव्यम् * कुत्सितं बहु भाषते, वाचालः । वाचाटः । यस्तु सम्यग्बहु भाषते स वाग्मीत्येव ।

१२६. स्वामिन्नैश्वर्ये । स्वामी ।

१२७. अर्श आदिभ्योऽच् । अर्शांस्यस्य विद्यन्ते, अर्शसः ।

१२९. वातातीसाराभ्यां कुक् च । वातकी । अतीसारकी । * रोगे चायमिष्यते * नेह :—वातवती गुहा । * पिशाचाच्च * पिशाचकी ।

१३१. सुखादिभ्यश्च । सुखी । दुःखी । * माला क्षेपे * मालो ।

१३२. धर्मशीलवर्णान्ताच्च । ब्राह्मणधर्मी । ब्राह्मणशीली । ब्राह्मणवर्णी ।

१३३. हस्ताज्जातौ । हस्ती । अन्यत्र हस्तवान् ।

१३४. वर्णाद् ब्रह्मचारिणि । वर्णी ब्रह्मचारी ।

१३५. पुष्करादिभ्यो देशे । पुष्करिणी । पद्मिनी । अन्यत्र पुष्करवान् करी । * बाहूरुपूर्वपदाद्बलात् * बाहुबली । * ऊरुबली । * सर्वादेश्च * सर्वधनी । सर्वबीजी * अर्थाच्चासन्निहिते * अर्थी । सन्निहिते तु, अर्थवान् ! * तदन्ताच्च * धान्यार्थी । हिरण्यार्थी ।

१३६. बलादिभ्यो मतुबन्यतरस्याम् । बलवान्, बली । उत्साहवान्, उत्साही ।

१३९ तुन्दिवलिवटेर्भः । तुन्दिभः । वलिभः । वटिभः ।

१४०. अहंशुभमोर्युस् । अहंयुः अहङ्कारवान् । शुभंयुः शुभान्वितः ।

इति लघुपाणिनीये पञ्चमाध्यायस्य द्वितीयपादः समाप्तः ।

# अथ पञ्चमाध्यायस्य तृतीयपादः

१. **प्राग्दिशो विभक्तिः** । ततः । यतः । कुतः ।

२. **किंसर्वनामबहुभ्योऽद्व्यादिभ्यः** । अधिक्रियतेऽयं प्राग्दिशः । कुतः कुत्र । यतः । यत्र । बहुतः । बहुत्र ।

३. **इदम इश्** । इह ।

४. **एतेतौ रथोः** । इशोपवादः । एतर्हि । इत्थम् ।

५. **एतदोऽन्** । एतदः ! एतर्हि । इत्थम् । अन् । अतः । अत्र ।

६. **सर्वस्य सोऽन्यतरस्यां दि** । सदा, सर्वदा ।

७. **पञ्चम्यास्तसिल्** । कुतः । यतः । ततः । बहुतः । अतः । इतः । अमुतः ।

८. तसेश्च । कुतः ?

९. **पर्यभिभ्यां च** । * सर्वोभयार्थाभ्यामेव * परितः । अभितः ।

१०. **सप्तम्यास्त्रल्** । कुत्र । यत्र । तत्र । बहुत्र ।

११. **इदमो हः** । त्रलोऽपवादः । इह ।

१२. **किमोऽत्** । क्व, कुत्र ।

१५. **सर्वैकान्यकिंयत्तदःकाले दा** । सर्वस्मिन्काले, सदा, सर्वदा । एकदा । अन्यदा । कदा । यदा । तदा । कालादन्यत्र सर्वत्रेत्यादि ।

१६. **इदमो र्हिल्** । अस्मिन्काले, एतर्हि ।

१७. **अधुना** । अधुना ।

१८. **दानीं च** ।इदानीम् ।

१९. **तदो दा च** । तदा, तदानीम् ।

२१. **अनद्यतने र्हिलन्यतरस्याम्** । कर्हि, कदा । यर्हि, यदा । तर्हि, तदा । एतर्हि ।

२२. **सद्यः परुत्परार्यैषमः परेद्यव्यद्य पूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः** । समानेऽहनि, सद्यः । पूर्वस्मिन् वत्सरे, परुत् । पूर्वतरे वत्सरे, परारि । अस्मिन्वत्सरे, ऐषमः । परस्मिन्नहनि, परेद्यवि । अस्मिन्नहनि, अद्य । पूर्वस्मिन्नहनि, पूर्वेद्युः । अन्यस्मिन्नहनि, अन्येद्युः । अन्यतरस्मि-

न्नहनि, अन्यतरेद्युः। इतरस्मिन्नहनि, इतरेद्युः। अपरस्मिन्नहनि, अपरेद्युः। अधरस्मिन्नहनि, अधरेद्युः। उभयोरह्नोरुभयेद्युः। उत्तरस्मिन्नहनि, उत्तरेद्युः। * द्युश्चोभयाद्वक्तव्यः * उभयद्युः।

२३—प्रकारवचने थाल्। तेन प्रकारेण, तथा। यथा।

२४—इदमस्थमुः। थालोऽपवादः। अनेन प्रकारेण, इत्थम्। * एतदोऽपि वाच्यः * एतेन प्रकारेण, इत्थम्।

२५—किमश्च। केन प्रकारेण, कथम्।

३०—अञ्चेर्लुक्। प्राच्यां प्राच्याः प्राची वा दिक्, देशः, कालो वा प्राक्। उदक्।

३१—उपर्युपरिष्टात्। उपरि,उपरिष्टाद्वा वसति, आगतः,रमणीयं वा।

३२—पश्चात्। पश्चादागतः। पश्चाद्रमणीयम्।

३४—उत्तराधरदक्षिणादातिः। उत्तरात्। अधरात्। दक्षिणात्।

३५—एनबन्यतरस्यामदूरेऽपञ्चम्याः। उत्तरेण। अधरेण। दक्षिणेन। पक्षे यथास्वं प्रत्ययाः। केचिद्दिक्शब्दमात्रात्प्रत्ययमिमं मन्यन्ते। पूर्वेण ग्रामम्। अपरेण।

३६—दक्षिणादाच्। दक्षिणा वसति। नेहः—दक्षिणादागतः।

३७—आहि च दूरे। दक्षिणाहि, दक्षिणा वसति।

३८—उत्तराच्च। उत्तराहि, उत्तरा।

३९—पूर्वाधरावराणामसि पुरधवश्चैषाम्। पुरः, अधः, अवः।

४०—अस्ताति च। पुरस्तात्। अधस्तात्। अवस्तात्।

४१—विभाषावरस्य। अवस्तात्। अवरस्तात्।

४२—संख्याया विधार्थे धा। चतुर्धा: पञ्चधा।

४३—अधिकरणविचाले च। एकं राशिं पञ्चधा कुरु।

४४—एकाद्धो ध्यमुञन्यतरस्याम्। ऐकध्यम्, एकधा।

४५—द्वित्र्योश्च धमुञ्। द्वैधम्, द्विधा। त्रैधम्, त्रिधा। * धमुञन्तात्स्वार्थेडदर्शनम्। पथि द्वैधानि।

४६—एधाच्च। द्वेधा। त्रेधा।

४७—याप्ये पाशप्। कुत्सितो भिषक्, भिषक्पाशः।

४८—पूरणाद्भागे तीयादन्। द्वितीयः, तृतीयो भागः।

५०—षष्ठाष्टमाभ्यां ञ च। षष्ठो भागः, षाष्ठः, षष्ठः। आष्टमः, अष्टमः।

५२—एकादाकिनिच्चासहाये। चात्कन्लुकौ, एकाकी, एककः, एकः।

५३—भूपूर्वे चरट्। आढ्यो भूतपूर्वः, आढ्यचरः।

५५—अतिशायने तमबिष्ठनौ। अयमेषामतिशयेनाढ्यः, आढ्यतमः। लघुतमो लघिष्ठः।

५६—तिङश्च। सर्वे इमे पचन्ति। अयमेषामतिशयेन पचति, पचतितमाम्।

५७—द्विवचनविभज्योपपदे तरबीयसुनौ। पूर्वयोरपवादः। अयमनयोरतिशयेन लघुर्लघुतरः, लघीयान्। उदीच्याः प्राच्येभ्यः पटुतराः, पटीयांसः।

६०—प्रशस्यस्य श्रः। अयमेषामतिशयेन प्रशस्यः, श्रेष्ठः। अयमनयोरतिशयेन प्रशस्यः, श्रेयान्।

६१—ज्य च। ज्येष्ठः, ज्यायान्।

६२—वृद्धस्य च। ज्येष्ठः, ज्यायान्। पक्षे वर्षिष्ठः, वर्षीयान्।

६३—अन्तिकबाढयोर्नेदसाधौ। नेदिष्ठः, नेदीयान्। साधिष्ठः, साधीयान्।

६४—युवाल्पयोः कनन्यतरस्याम्। कनिष्ठः, कनीयान्। पक्षे यविष्ठः, अल्पिष्ठः।

६५—विन्मतोर्लुक्। अतिशयेन स्रग्वी, स्रजिष्ठः, स्रजीयान्। अतिशयेन त्वग्वान्, त्वचिष्ठः, त्वचीयान्।

६७—ईषदसमाप्तौ कल्पब्देश्यदेशीयरः। ईषदूनो विद्वान, विद्वत्कल्पः। यशस्कल्पम्। यजुष्कल्पम्। विद्वद्देश्यः। पचतिकल्पम।

६८—विभाषा सुपो बहुच् पुरस्तात्तु। ईषदूनः पटुः, बहुपटुः। पटुकल्पः।

६९—प्रकारवचने जातीयर्। पटुप्रकारः, पटुजातीयः।

७०—प्रागिवात्कः। इवे प्रतिकृतावित्यतः प्राक् काधिकारः।

७१—अव्ययसर्वनाम्नामकच्प्राक्टेः। उच्चकैः। नीचकैः। शनकैः। सर्वके। विश्वके। उभयके।

७२—कस्य च दः। धकित्, धिक्। हिरकुत्, हिरुक्।

७३—अज्ञाते। कस्यायमश्वोऽश्वकः? गर्दभकः? उष्ट्रकः? * ओकारसकारभकरादौ सुपि सर्वनाम्नष्टेः प्रागकच् * युवकयोः। आवकयोः। युष्मकासु। अस्मकासु। युष्मकाभिः। अस्मकाभिः। * अकच्प्रकरणे तूष्णीमः काम् वक्तव्यः * तूष्णीकामास्ते। * शीले को मलोपश्च * तूष्णींशीलः, तूष्णीकः। पचतकि। जल्पतकि।

७४—कुत्सिते । कुत्सितोऽश्वोऽश्वकः ।

८८—कुटीशमीशुण्डाभ्यो रः । ह्रस्वा कुटी, कुटीरः । शमीरः । शुण्डारः ।

८९—कुत्वा डुपच् । ह्रस्वा कुतूः, कुतुपः ।

९१—वत्सोक्षाश्वर्षभेभ्यश्चतनुत्वे । वत्सतरः । अक्षतरः । अश्वतरः । ऋषभतरः ।

९२—किंयत्तदो निर्धारणे द्वयोरेकस्य डतरच् । अनयोः कतरो वैष्णवः । यतरः । ततरः । महाविभाषया यः । कः ।

९३—वा बहूनां जातिपरिप्रश्ने डतमच् । कतमो भवतां कठः? यतमः । ततमः । वाग्रहणादकजपि । यकः । सकः । महाविभाषया यः । सः । * किमोऽस्मिन्विषये डतरजपि * कतरः ।

९६—इवे प्रतिकृतौ । अश्व इव प्रतिकृतिः, अश्वकः ।

१०३—शाखादिभ्यो यः । शाखेव, शाख्यः । मुख्यः । जघन्यः । अग्र्यः, शरण्यः ।

१०५—कुशाग्राच्छः । कुशाग्रमिव, कुशाग्रीया बुद्धिः ।

इति लघुपाणिनीये पंचमाध्यायस्य तृतीयःपादः समाप्तः ।

# अथ लघुपाणिनीये पंचमाध्यायस्य चतुर्थपादः

१७—संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्। पञ्चकृत्वो भुङ्क्ते।

१८—द्वित्रिचतुर्भ्यः सुच्। कृत्वसुचोऽपवादः। द्विर्भुङ्क्ते। त्रिः। चतुः।

१९—एकस्य सकृच्च। सकृद् भुङ्क्ते।

२०—विभाषा बहोर्धाऽविप्रकृष्टकाले। बहुधा दिवसस्य भुङ्क्ते। विप्रकृष्टकाले तु, बहुकृत्वो मासस्य भुङ्क्ते।

२१—तत्प्रकृतवचने मयट्। प्रकृतमन्नमन्नमयम्। अपूपमयम्। यवागूमयी। यद्वा अन्नमयो यज्ञः। अपूपमयं पर्व।

२५—पादार्घाभ्यां च। पादार्थमुदकं पाद्यम्। अर्घ्यम्। * नवस्य नू आदेशस्त्नप्तनप्खाश्च प्रत्यया वक्तव्याः * नूत्नम्, नूतनम्, नवीनम्। * नश्च पुराणे प्रात् * प्रणम्, प्रत्नम्, प्रतनम्, प्रीणम्। * भागरूपनामभ्यो धेयः * भागधेयम्। रूपधेयम्। नामधेयम्। * आग्नीध्रसाधारणादञ् * आग्नीध्रम्। साधारणम्। आग्नीध्री। साधारणी।

२६—अतिथेर्ञ्यः। अतिथये इदमातिथ्यम्।

२७—देवात्तल्। देव एव, देवता।

२८—अवेः कः। अविरेव, अविकः।

२९—यावादिभ्यः कन्। याव एव, यावकः। मणिकः।

३४—विनयादिभ्यष्ठक्। विनय एव, वैनयिकः। सामयिकः। * उपायो ह्रस्वत्वं च * औपयिकः।

३५—वाचो व्याहृतार्थायाम्। संदेशवाग्, वाचिकं स्यात्।

३८—प्रज्ञादिभ्यश्च। प्रज्ञ एव, प्राज्ञः। प्राज्ञी स्त्री। दैवतः। बान्धवः।

३९—मृदस्तिकन्। मृत्तिका।

४०—सस्नौ प्रशंसायाम्। रूपपोऽपवादः। प्रशस्ता मृत्, मृत्सा, मृत्स्ना।

४२—बह्वल्पार्थाच्छस्कारकादन्यतरस्याम्। बहुशो ददाति। अल्पशः।

५०—कृभ्वस्तियोगे संपद्यकर्तरि च्विः। * अभूततद्भाव इति वक्तव्यम् * अकृष्णः कृष्णः संपद्यते तं करोति, कृष्णीकरोति। ब्रह्मीभवति। गङ्गीस्यात्। गार्गीभवति। दोषाभूतमहः। दिवाभूता रात्रिः।

६७—**अव्यक्तानुकरणाद् द्व्यजवरार्धादनितौ डाच्** । पटपटाकरोति पटपटाभवति ।

६८—**समासान्ताः** । अधिकारोऽयमापादसमाप्तेः ।

६९—**न पूजनात्** । सुराजा । अतिराजा । सुगौः । अतिगौः । * स्वतिभ्यामेव * नेह :—परमराजः । * प्राग्बहुव्रीहिग्रहणञ्च * सुसक्थः । स्वक्षः ।

७०—**किमः क्षेपे** । कुत्सितो राजा, किंराजा । किंसखा । किंगौः । क्षेपादन्यत्र तु, कश्चायं राजा, किंराजः । किंसखः । किंगवः ।

७१—**नञस्तत्पुरुषात्** । अराजा । असखा ।

७२—**पथो विभाषा** । अपथम्, अपन्थाः । तत्पुरुषादित्येव । अपथो देशः ।

७३—**बहुव्रीहौ संख्येये डजबहुगणात्** । उपदशाः । उपविंशाः । द्वित्राः । पञ्चषाः । * संख्यायास्तत्पुरुषस्य वाच्यः * निर्गतानि त्रिंशतो निस्त्रिंशानि वर्षाणि चैत्रस्य । निर्गतस्त्रिंशतोऽङ्गुलिभ्यो निस्त्रिंशः खड्गः ।

७४—**ऋक्पूरब्धूःपथामानक्षे** । अर्धर्चः । अनृचबह्वृचावध्येतर्येव । विष्णोः पूः, विष्णुपुरम् । विमलापं सरः । द्वीपम् । राजधुरा । जलपथः । रम्यपथः । अक्षे तु, अक्षधूः । दृढधूरक्षः ।

७६—**अक्ष्णोऽदर्शनात्** । गवामक्षीव, गवाक्षः ।

७७—**अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तन्दिवरात्रिन्दिवाहर्दिवसरजसनिःश्रेयसपुरुषायुषद्व्यायुषत्र्यायुषर्ग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः** । अविद्यमानानि चत्वार्यस्य, अचतुरः । विचतुरः । सुचतुरः । * त्र्युपाभ्यां चतुरोऽजिष्यते * त्रिचतुराः । उपचतुराः, स्त्रीपुंसौ । धेन्वनडुहौ । ऋक्सामे । वाङ्मनसे । अक्षिणी च भ्रुवौ च, अक्षिभ्रुवम् । दाराश्च गावश्च, दारगवम् । ऊरू च अष्ठीवन्तौ च, ऊर्वष्ठीवम् । पदष्ठीवम् । नक्तं च दिवा च, नक्तन्दिवम् । रात्रौ च दिवा च, रात्रिन्दिवम् । अहनि च दिवा च, अहर्दिवम् । सरजसम् । निश्चितं श्रेयो निःश्रेयसम् । पुरुषस्यायुः, पुरुषायुषम् । द्व्यायुषम् । त्र्यायुषम् । ऋग्यजुषम् । जातोक्षः । महोक्षः । वृद्धोक्षः । उपशुनम् । गोष्ठे श्वा, गोष्ठश्वः ।

७८—**ब्रह्महस्तिभ्यां वर्चसः** । ब्रह्मवर्चसम् । हस्तिवर्चसम् । * पल्यराजभ्यां चेति वक्तव्यम् * पल्यवर्चसम् । राजवर्चसम् ।

७९—**अवसमन्धेभ्यस्तमसः** । अवतमसम् । सन्तमसम् । अन्धतमसम् ।

८०—श्वसो वसीयःश्रेयसः । श्वोवसीयसम् । श्वःश्रेयसम् ।

८१—उपसर्गादध्वनः । प्रगतोऽध्वानं प्राध्वो रथः ।

८६—तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः । द्वे अङ्गुली प्रमाणमस्य, द्व्यङ्गुलं दारु । निर्गतमङ्गुलिभ्यो निरङ्गुलम् ।

८७—अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः । अहश्च रात्रिश्चाहोरात्रः । सर्वा रात्रिः, सर्वरात्रः । पूर्वं रात्रेः, पूर्वरात्रः । संख्यातरात्रः । पुण्यरात्रः । द्विरात्रम् । अतिरात्रः ।

८८—अह्नोऽह्न एतेभ्यः । सर्वाह्णः । पूर्वाह्णः । संख्याताह्नः । द्वयोरह्नोर्भवः, द्व्यह्नः । द्व्यह्ना । द्व्यह्नप्रियः । अत्यह्नः । दीर्घाह्नी प्रावृट् ।

८९—न संख्यादेः समाहारे । द्वयोरह्नोः समाहारः, द्व्यहः । त्र्यहः ।

९०—उत्तमैकाभ्यां च । पुण्याहम् । सुदिनाहम् । एकाहः । उत्तमग्रहणमुपान्त्यस्यापि संग्रहार्थमित्येके । संख्याताहः ।

९१—राजाहःसखिभ्यष्टच् । परमराजः । अतिराजी । उत्तमाहः । कृष्णसखः । लिङ्गविशिष्टपरिभाषाया अनित्यत्वान्नेह :—मद्राणां राज्ञी, मद्रराज्ञी ।

९२—गोरतद्धितलुकि । परमगवः । पञ्चगवम् । पञ्चगवधनः । तद्धितलुकि तु, पञ्चभिर्गोभिः क्रीतः, पञ्चगुः ।

१०६—द्वन्द्वाच्चुदषहान्तात्समाहारे । वाक्त्वचम् । त्वक्स्रजम् । शमीदृषदम् । वाक्त्विषम् । छत्रोपानहम् । समाहारादन्यत्र तु, प्रावृट्शरदौ ।

१०७—अव्ययीभावे शरत्प्रभृतिभ्यः । उपशरदम् । प्रतिविपाशम् । * जराया जरश्च * उपजरसम् , * प्रतिपरसमनुभ्योऽक्ष्णः * प्रत्यक्षम् । परोक्षम् । समक्षम् । अन्वक्षम् ।

१०८—अनश्च । उपराजम् । अध्यात्मम् ।

१०९—नपुंसकादन्यतरस्याम् । उपचर्मम् , उपचर्म ।

११०—नदीपौर्णमास्याग्रहायणीभ्यः । उपनदम्, उपनदि । उपपौर्णमासम् , उपपौर्णमासि । उपाग्रहायणम् , उपाग्रहायणि ।

१११—झयः । उपसमिधम् , उपसमित् ।

११२—गिरेश्च सेनकस्य । उपगिरम्, उपगिरि ।

११३—बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच् । दीर्घे सक्थिनी यस्य सः, दीर्घसक्थः । जलजाक्षी । स्वाङ्गादन्यत्र दीर्घसक्थि सकटम् । स्थूलाक्षा वेणुयष्टिः ।

११४—अङ्गुलेर्दारुणि । पञ्चाङ्गुलयो यस्य तत्पञ्चाङ्गुलं दारु । बहुव्रीहेरन्यत्र तु, द्वे अङ्गुली प्रमाणमस्याः, द्व्यङ्गुला यष्टिः । दारुणोऽन्यत्र पञ्चाङ्गुलिर्हस्तः ।

११५—द्वित्रिभ्यां ष मूर्ध्नः । द्विमूर्धः । त्रिमूर्धः

११६—अप्पूरणीप्रमाण्योः । कल्याणी पञ्चमी यासां रात्रीणां ताः, कल्याणीपञ्चमाः रात्रयः । स्त्री प्रमाणी यस्य स स्त्रीप्रमाणः । * प्रधानपूरण्यामेव * नेह :—कल्याणपञ्चमीकः पक्षः । * नेतुर्नक्षत्रे अब्वक्तव्यः * मृगो नेता यासां ताः, मृगनेत्रा रात्रयः । पुष्यनेत्राः ।

११७—अन्तर्बहिर्भ्यां च लोम्नः । अन्तर्लोमः । बहिर्लोमः ।

११८—अञ्नासिकायाः संज्ञायां नसं चास्थूलात् । द्रुरिव नासिकास्य, द्रुणसः । खरणसः । स्थूलात्तु,स्थूलनासिकः । * खुरखराभ्यां वा नस् * खुरणाः । खरणाः । पक्षेऽजपीष्यते । खुरणसः । खरणसः ।

११९—उपसर्गाच्च । उन्नता नासिकास्य, उन्नसः । प्रणसः । * वेर्ग्रो वक्तव्यः * विगता नासिकास्य, विग्रः । * ख्यश्च * विख्यः ।

१२०—सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रैणीपदाजपदप्रोष्ठपदाः । शोभनं श्वोऽस्य, सुश्वः । सुदिवः । शारेरिव कुक्षिरस्य, शारिकुक्षः । चतस्रोऽश्रयोऽस्य, चतुरश्रः । एण्या इव पादावस्य, एणीपदः । अजपदः ! प्रोष्ठपदः ।

१२१—नञ्दुःसुभ्यो हलिसक्थ्योरन्यतरस्याम् । अहलः, अहलिः । असक्थः, असक्थिः । दुर्हलः, दुर्हलिः । दुःसक्थः, दुःसक्थिः । सुहलः, सुहलिः । सुसक्थः । सुसक्थिः ।

१२२—नित्यमसिच् प्रजामेधयोः । अप्रजाः । दुष्प्रजाः । सुप्रजाः । अमेधाः । दुर्मेधाः । सुमेधाः ।

१२७—इच्कर्मव्यतिहारे । केशाकेशि । मुसलामुसलि ।

१३१—ऊधसोऽनङ् । कुण्डोध्नी । घटोध्नी । * ऊधसोऽनङि स्त्रीग्रहणम् * नेह :—महोधाः पर्जन्यः । घटोधो धेनुकम् ।

१३२—धनुषश्च । शार्ङ्गधन्वा ।

१३३—वा संज्ञायाम् । शतधन्वा, शतधनुः ।

१३४—जायाया निङ् । युवतिर्जाया यस्य सः, युवजानिः ।

१३५—गन्धस्येदुत्पूतिसुसुरभिभ्यः । उद्गन्धिः । पूतिगन्धिः । सुगन्धिः । सुरभिगन्धिः । * गन्धस्येत्त्वे तदेकान्तग्रहणम् * सुगन्धि पुष्पं सलिलञ्च । नेह :—सुगन्ध आपणिकः ।

१३६—अल्पाख्यायाम् । सूपस्य गन्धो लेशोऽस्मिन्, सूपगन्धि भोजनम् । घृतगन्धि ।

१३७—उपमानाच्च । पद्मस्येव गन्धोऽस्य, पद्मगन्धि ।

१३८—पादस्य लोपोऽहस्त्यादिभ्यः । व्याघ्रस्येव पादौ यस्य, व्याघ्रपात् । हस्त्यादिभ्यस्तु, हस्तिपादः । कुसूलपादः ।

१४७—त्रिककुत्पर्वते । त्रिककुत् । अन्यत्र त्रिककुदः ।

१४९—पूर्णाद्विभाषा । पूर्णकाकुत् पूर्णकाकुदः ।

१५०—सुहृद्दुर्हृदौ मित्रामित्रयोः । सुहृन्मित्रम् । दुर्हृदमित्रः । अन्यत्र सुहृदयः । दुर्हृदयः ।

१५१—उरःप्रभृतिभ्यः कप् । व्यूढोरस्कः । प्रियसर्पिष्कः । * अर्थान्नञः * अनर्थकम् ।

१५२—इनः स्त्रियाम् । बहुदण्डिका नगरी । अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति । बहुवाग्मिका । पुंसि तु, बहुदण्डी, बहुदण्डिको ग्रामः ।

१५३—नद्यृतश्च । बहुकुमारीको देशः । कल्याणपञ्चमीकः पक्षः । बहुकर्तृकः ।

१५४—शेषाद्विभाषा । महायशस्कः, महायशाः । शेषादित्युक्तेर्नेह :—व्याघ्रपाद्, सुगन्धिः, प्रियपथः—इत्यादि । उपबहवः । उत्तरपूर्वा । सपुत्रः —इत्यादि च ।

१५६—ईयसश्च । बहवः श्रेयांसोऽस्य, बहुश्रेयान् । बहुश्रेयसी ।

इति लघु पाणिनीये पञ्चमाध्यायस्य चतुर्थपादः समाप्तः

समाप्तश्च पञ्चमाध्यायः

# अथ लघुपाणिनीये षष्ठाध्यायस्य प्रथमपादः

१—एकाचो द्वे प्रथमस्य । अधिकारोऽयं प्राक्संप्रसारणविधानात् । जजागार । पपाच । इयाय । आर । बभूव ।

२—अजादेर्द्वितीयस्य । पूर्वापवादः । इदमपि पूर्वत्रदधिक्रियते । अटिटिषति । अशिशिषति । उणुनाव ।

३—नन्द्राः संयोगादयः । उन्दिदिषति । अड्डिडिषति । अर्चिचिषति । अर्जादेरेव । नेह :—दिद्रासति । इन्दिद्रियिषति । ञ्जिजिषति । कारयते । * ईर्ष्यतेस्तृतीयस्येति वाच्यम् * ईर्ष्यियिषति । केचिदाहुर्व्यञ्जनस्य । ईर्ष्यियिषति । ऐर्ष्यियत्, ऐर्षिष्यत् । * कण्ड्वादेस्तृतीयस्य * कण्डूयियिषति । * यथेष्टं नामधातुषु * पुपुत्रीयिषति । पुतित्रीयिषति । पुत्रीयियिषति । अजादेस्तु आद्येतरस्य अशिश्वीयिषति । अश्वीयियिषति

४—पूर्वोऽभ्यासः । पपाच । बभूव । पिपक्षति । पापच्यते । जुहोति । प्रदीपवत् ।

५—उभे अभ्यस्तम् । ददति । ददत् । जुह्वति । जुह्वत् ।

६—जक्षित्यादयः षट् । जक्षति । जाग्रति । दरिद्रति । शासति । चकासति । दीध्यते । वेव्यते । दीध्यत् । वेव्यत् ।

८—लिटि धातोरनभ्यासस्य । पपाच । पपाठ । बभूव । आत । * छन्दसि वा * यो जागार तमृचः कामयन्ते । दाति प्रियाणि चिद्वसु ।

९—सन्यङोः । पिपक्षति । बुभूषति । पिपतिषति । पापच्यते । अटाट्यते ।

१०—श्लौ । जुहोति । बिभेति । ददाति ।

११—चङि । अचीकमत । अपीपचत् । आटिटत् ।

१३—ष्यङः सम्प्रसारणं पुत्रपत्योस्तत्पुरुषे । कारीषगन्धीपुत्रः । कारीषगन्धीपतिः । कौमुदगन्धीपुत्रः । कौमुदगन्धीपतिः । नेह :—कारीषगन्ध्याकुलम् । कौमुदगन्ध्याकुलम् । अनुपसर्जनस्त्रीप्रत्यये तदादिनियमो न । परमकारीषगन्धीपुत्रः । उपसर्जने तु तदादिनियमः । अतिकारीषगन्ध्यापुत्रः ।

१५—वचिस्वपियजादीनां किति । उक्तम्, ऊचतुः । सुप्तम्, सुषुपतुः । इष्टः, ईजतुः । उप्तम्, ऊपतुः । ऊढः, ऊहतुः । उषितः, ऊषतुः । उतः । संवीतः । हूतः । उदितः । शूनः ।

१६—ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च। गृहीत, गृह्णाति। जीनः, जिनाति। ऊयतुः, ऊवतुः। विद्धः, विध्यति। उष्टः, उशन्ति। विचितः, विचन्ति। वृक्णः, वृश्चति। पृष्टः, पृच्छति। भृष्टः, भृज्जति।

१७—लिट्यभ्यासस्योभयेषाम्। उवाच, उवचिथ। सुष्वाप, सुष्वपिथ। इयाज, इयजिथ। उवाप, उवपिथ। जग्राह, जग्रहिथ। जिज्यौ, जिज्यिथ। उवाय। विव्याध। उवाश। वव्रश्च। पप्रच्छ। बभर्ज।

१८—स्वापेश्चङि। असूषुपत, असूषुपताम्, असूषुपन्।

१९—स्वपिस्यमिव्येञां यङि। सोषुप्यते। सेसिम्यते। वेवीयते।

२२—स्फायः स्फी निष्ठायाम्। स्फीतः, स्फीतवान्।

२७—श्रृतं पाके : श्रृतं क्षीरं हविर्वा। व्यवस्थितविभाषाश्रयणात् क्षीर-हविर्भ्यामन्यत्र श्राणं श्रपितं वा।

३०—विभाषा श्वेः। शुशाव, शिश्वाय। शुशुवतुः, शिश्वियतुः। शोशूयते शेश्वीयते।

३१—णौ च संश्चङोः। शुशावयिषति, शिश्वाययिषति। अशूशवत्, अशिश्वयत्।

२३—ह्वः सम्प्रसारणम्। जुहावयिषति, अजूहवत्। अजूहावत्।

३३—अभ्यस्तस्य च। जुहाव, जोहूयते। जुहूषति।

३७—न सम्प्रसारणे सम्प्रसारणम्। विद्धः। विचितः। यूनः। * ऋचि त्रेरुत्तरपदादिलोपश्च छन्दसि * तृचं सूक्तम्। लोके तु, त्र्यृचानि। * रयेर्मतौ बहुलम् * रेवान्, रयिमान् पुष्टिवर्धनः।

४५—आदेच उपदेशेऽशिति। ग्लै-ग्लाता, ग्लातुम्, ग्लातव्यम्। शो—निशाता। निशातुम्। निशातव्यम्। शिति तु, ग्लायति। म्लायति।

४८—क्रीङ्जीनां णौ। क्रापयति। अध्यापयति। जापयति।

४९—सिध्यतेरपारलौकिके। अन्नं साधयति। पारलौकिके तु तपस्तापसं सेधयति।

५०—मीनातिमिनोतिदीङां ल्यपि च। प्रमाता, प्रमातव्यम्, प्रमातुम्, प्रमाय। निमाता, निमाय। दाता, दातव्यम्, दातुम्, प्रदाय।

५६—बिभेतेर्हेतुभये। मुण्डो भापयते, भीषयते वा। अन्यत्र तु, कुञ्चिकया भाययति।

५७—नित्यं स्मयतेः । जटिलो विस्मापयते । नेह :—कुञ्चिकया विस्मायति ।

५८—सृजिदृशोर्झल्यमकिति । गुणापवादः । स्रष्टा, स्रष्टुम्, स्रष्टव्यम्, अस्राक्षीत् । द्रष्टा, द्रष्टुम्, द्रष्टव्यम्, अद्राक्षीत् । नेह :—सर्जनम् । दर्शनम् । किति तु, सृष्टः । दृष्टः ।

५९—अनुदात्तस्य चर्दुपधस्यान्यतरस्याम् । त्रप्ता, तर्प्ता, तर्पिता । द्रप्ता, दर्प्ता, दर्पिता । किति तु, तृप्तः, दृप्तः ।

६३-पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु । पदः, पादान् । पदा, पादेन । पद्भ्याम्, पादाभ्यामित्यादि । दतः, दन्तान् । दता, दन्तेन । दद्भ्याम्, दन्ताभ्यामित्यादि । नसः, नासिकाः । नसा, नासिकया । नोभ्याम्, नासिकाभ्यामित्यादि । मासः, मासान् । मासा, मासेन । माभ्याम्, मासाभ्यामित्यादि । हृन्दि, हृदयानि । हृदा, हृदयेन हृद्भ्याम्, हृदयाभ्यामित्यादि । निशः, निशाः । निशा, निशया ! निड्भ्याम्, निशाभ्यामित्यादि । असानि, असृञ्जि । अस्ना, असृजा । असभ्याम्, असृग्भ्यामित्यादि । यूष्णः, यूषान् । यूष्णा, यूषेण । यूषभ्याम्, यूषाभ्यामित्यादि । दोष्णः, दोषान् । दोष्णा, दोषेण । दोषभ्याम्, दोषाभ्यामित्यादि । यकानि, यकृन्ति । यक्ना, यकृता । यकभ्याम्, यकृद्भ्यामित्यादि । शकानि शकृन्ति । शक्ना, शकृता । शकभ्याम्, शकृद्भ्यामित्यादि । उदानि, उदकानि । उद्ना, उदकेन । उदभ्याम्, उदकाभ्यामित्यादि । आसानि, आस्यानि । आस्ना, आस्येन । आसभ्याम्, आस्याभ्यामित्यादि । * मांसपृतनासानूनां मांस्पृत्स्नवो वाच्याः शसादौ वा * मांसि, मांसानि । मांसा, मांसेन । मान्भ्याम्, मांसाभ्यामित्यादि । पृतः, पृतनाः । पृता, पृतनया । पृद्भ्याम्, पृतनाभ्यामित्यादि । स्नूनि, सानूनि । स्नुना, सानुना । स्नुभ्याम्, सानुभ्यामित्यादि ।

६४—धात्वादेः षः सः । षह-सहते । षिच-सिञ्चति । * सुब्धातुष्ठिवुष्वष्कतीनां प्रतिषेधो वक्तव्यः * षोढीयति । षण्ढीयति । ष्ठीव्यति, ष्ठीवति, ष्वष्कते ।

६५—णो नः । णीञ्-नयति । णम-नमति । णह-नह्यति ।

६६—लोपो व्योर्वलि । दिवु-दिदिवान् । भवेत्, पचेत् । ऊयी-ऊतम् । क्नूयी-क्नूतम् । गौधेरः । जीव-जीरदानुः । स्त्रिवु-आस्रेमाणम् ।

६७—वेरपृक्तस्य । ब्रह्महा । घृतस्पृक् । अंशभाक् ।

६८—**हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल्** । सखा, उखास्रत् । कुमारी, गौरी, शार्ङ्गरवी । रमा, बहुराजा, कारीषगन्ध्या । अविभः । अहन् । नेह :—निष्कौशाम्बिः । अतिखट्वः ।

६९—**एङ्ह्रस्वात्सम्बुद्धेः** । हे हरे, हे भानो । हे राम, हे नदि, हे वधु ।

७१—**ह्रस्वस्य पिति कृति तुक्** । इत्यः, स्तुत्यः । अग्निचित्, सोमसुत् । प्रकृत्य ।

७२—**संहितायाम्** । अधिकारोऽयमनुदात्तं पदमेकवर्जमिति यावत् । दध्यत्र । मध्वत्र । असंहितायान्तु, दधि अत्र, मधु अत्र ।

७३—**छे च** । इच्छति । गच्छति । शिवच्छाया ।

७७—**इको यणचि** । दध्यत्र, सुध्युपास्यः । मध्वत्र, मध्वरिः । धात्रंशः । लाकृतिः ।

७८—**एचोऽयवायावः** । हरये । विष्णवे । नायकः । पावकः ।

७९—**वान्तो यि प्रत्यये** । गव्यम् । नाव्यम् । * गोयूतौ छन्दसि * घृतैर्गव्यूतिमुक्षतम् । * अध्वपरिमाणे च * गव्यूतिः ।

८४—**एकः पूर्वपरयोः** । अधिकारोऽयं ख्यत्यादित्यतः प्राक् ।

८५—**अन्तादिवच्च** । ब्रह्मबन्धूः । वृक्षौ । * वर्णाश्रयेऽन्तादिवद्भावप्रतिषेधः * खट्वाभिः, रमाभिः । जुहाव ।

८७—**आद् गुणः** । उपेन्द्रः, रमेशः । गङ्गोदकम् । कृष्णर्द्धिः । तवल्कारः ।

८८—**वृद्धिरेचि** । गुणस्यापवादः । कृष्णैकत्वम् । देवैश्वर्यम् । गङ्गौघः । कृष्णौत्कण्ठ्यम् ।

८९—**एत्येधत्यूठ्सु** । पररूपगुणापवादः । उपैति । उपैधते । प्रष्ठौहः । नेह :—उपेतः । मा भवान् प्रेदिधत् । * अक्षादूहिन्यामुपसंख्यानम् * अक्षौहिणी सेना । * स्वादोरेरिणो * स्वैरः । स्वैरी । स्वैरिणी । * प्रादूहोढोढ्येषैष्येषु * प्रौहः । प्रौढः । अर्थवद्ग्रहणे नानर्थकस्य ग्रहणम् । प्रोढवान् । प्रौढिः । प्रैषः । प्रैष्यः । * ऋते च तृतीयासमासे * सुखेन ऋतः, सुखार्तः । दुःखार्तः । * प्रवत्सतरकम्बलवसनार्णदशानामृणे * प्रार्णम् । वत्सतरार्णम् । कम्बलार्णम् । वसनार्णम् । ऋणार्णम् । दशार्णो देशः । नदी च दशार्णा ।

९०—**आटश्च** । ऐक्षत । ऐधत । ऐधिष्ट । ऐक्षिष्ट । तद्बुश्रेयस्यै, बहुश्रेयस्याः । चकारोऽधिकविधानार्थः । उस्योमाङ्क्षु पररूपबाधनार्थः । औस्रीयत् । औङ्कारीयत् । आ+ऊढ ओढस्तमैच्छत्, औढीयत् ।

९१—उपसर्गादृति धातौ। गुणापवादः। प्राच्र्छति। उपार्च्छति।

९३—औतोऽम्शसोः। गां पश्य। द्यां पश्य। गाः। द्याः :

९४—एङि पररूपम्। वृद्धिरेचीत्यस्यापवादः। प्रेजते। उपोषति। एङादौ सुब्धातौ वा। उपेडकीयति, उपैडकीयति। प्रोघीयति, प्रौघीयति। * शकन्ध्वादिषु पररूपं वाच्यम् * तच्च टेः। शकन्धुः। कर्कन्धुः। कुलटा। सीमन्तः केशवेशे। सीमान्तोऽन्यः। मनीषा। हलीषा। लाङ्गलीषा। पतञ्जलिः। सारङ्गः पशुपक्षिणोः। साराङ्गोऽन्यः। आकृतिगणोऽयम्। मार्तण्डः। * एवे चानियोगे * क्वेव भोक्ष्यसे ? * ओत्वोष्ठयोः समासे वा * स्थूलोतुः, स्थूलौतुः। बिम्बोष्ठः, बिम्बौष्ठः। नेह :—तवौष्ठः। * एमन्नादिषु छन्दसि * अपां त्वेमन्। अपां त्वोद्मन्।

९५—ओमाङोश्च। शिवायोंनमः। शिव + एहि = शिवेहि। कदा + ओढः = कदोढः।

९६—उस्यपदान्तात्। अपुः। भिन्द्युः। अद्युः।

९७—अतो गुणे। पचन्ति। एधे।

१०१—अकः सवर्णे दीर्घः। दैत्यारिः। श्रीशः। विष्णूदयः। अनचि तु, कुमारी शेते। * ऋति सवर्णे ऋ वा * होतॄकारः। होतृकारः। * लृति सवर्णे लृ वा * होत्लृकारः। होतॄकारः।

१०२—प्रथमयोः पूर्वसवर्णः। हरी। भानू। रामाः। हरीन्। भानून्। रामान्।

१०३—तस्माच्छसो नः पुंसि। हरीन्। रामान्। भानून्। कर्त्तॄन्।

१०४—नादिचि। रामौ। शिवोऽर्च्यः।

१०५—दीर्घाज्जसि च। विश्वपौ, विश्वपाः। पप्यौ, पप्यः। गौर्यौ, गौर्यः। वध्वौ, वध्वः।

१०७—अमि पूर्वः। रामम्। हरिम्। गौरीम्। भानुम्। वधूम्। वा छन्दसीत्येव। शमीं च शम्यं च। सूर्म्यं सुषिरामिव।

१०८—सम्प्रसारणाच्च। इष्टम्। उप्तम्। गृहीतम्। वा छन्दसीत्येव। इज्यमानः, यज्यमानः।

१०९—एङः पदान्तादति। हरेऽव। विष्णोऽव।

११०—ङसिङसोश्च। हरेः। विष्णोः।

१११—ऋत उत्। क्रोष्टुः। पितुः।

११२—ख्यत्यात्परस्य । सख्युः । पत्युः । लून्युः ।

११३—अतो रोरप्लुतादप्लुते । शिवोऽर्च्यः । रामोऽत्र । नेहः—देवा अत्र । श्व आगन्ता । एहि सुस्रोत३ अत्र स्नाहि ।

११४—हशि च । शिवो वन्द्यः ।

१२५—प्लुतप्रगृह्या अचिनित्यम् । एहि कृष्ण३अत्र गौश्चरति ।

१३१—दिव उत् । द्युभ्यां द्युभिरित्यादि । द्युकामः । द्युमान् । विमलद्यु दिनम् ।

१३२—एतत्तदोः सुलोपोऽकोरनञ्समासे हलि । एष विष्णुः । स शम्भुः । अकोरित्युक्तेः एषको रुद्रः । नञ्समासे तु, असः शिवः ।

१३५—सुट् कात्पूर्वः । अधिकारोऽयं पारस्करप्रभृतीनि चेति यावत् ।

१३६—अडभ्यासव्यवायेऽपि । समस्करोत् । समस्कार्षीत् । संचस्कार । परिचस्कार ।

१३७—संपरिभ्यां करोतौ भूषणे । संस्कर्त्ता । संस्कर्तुम् । संस्कर्त्तव्यम् परिष्कर्त्तुम् । परिष्कर्त्तव्यम् ।

१३८—समवाये च । तत्र नः संस्कृतम् । परिष्कृतम् ।

१३९—उपात् प्रतियत्नवैकृतवाक्याध्याहारेषु च । एधोदकस्योपस्कुरुते । उपस्कृतं भुङ्क्ते । उपस्कृतं ब्रूते । उपस्कृता कन्या । उपस्कृता ब्राह्मणाः ।

१४०—किरतौ लवने । उपस्किरति । उपचस्कार । उपास्किरत् ।

इति लघुपाणिनीये षष्ठाध्यायस्य प्रथमः पादः समाप्तः ।

# अथ लघुपाणिनीये षष्ठाध्यायस्य तृतीयपादः

१. अलुगुत्तरपदे । अलुगधिकारः प्रागानङः । उत्तरपदाधिकारस्त्वापादसमाप्तेः ।

२. पञ्चम्याः स्तोकादिभ्यः । स्तोकान्मुक्तः, अल्पान्मुक्तः । अन्तिकादागतः, अभ्याशादागतः । दूरादागतः, विप्रकृष्टादागतः । कृच्छ्रान्मुक्तः । * ब्राह्मणाच्छंसिन उपसंख्यानम् । ब्राह्मणाच्छसी ऋत्विग्विशेषः ।

३. ओजःसहोऽम्भस्तमसस्तृतीयायाः । ओजसाकृतम् । सहसाकृतम् । अम्भसाकृतम् । तमसाकृतम् । * अञ्जस उपसंख्यानम् * अञ्जसाकृतम् । * पुंसानुजो जनुषान्ध इति च * यस्याग्रजः पुमान् स पुंसानुजः । जनुषान्धो जन्मान्धः ।

६. आत्मनश्च । * पूरण इति वक्तव्यम् * आत्मनापञ्चमः ।

७. वैयाकरणाख्यायां चतुर्थ्याः । आत्मनेपदम् । आत्मनेभाषाः ।

८. परस्य च । परस्मैपदम् । परस्मैभाषाः ।

९. हलदन्तात्सप्तम्याः संज्ञायाम् । त्वचिसारः । युधिष्ठिरः । अरण्येतिलकाः । * हृद्द्युभ्यां च * हृदिस्पृक् । दिविस्पृक् ।

१४. तत्पुरुषे कृति बहुलम् । स्तम्बेरमः । कर्णेजपः क्वचिन्न । कुरुचरः ।

१५. प्रावृट्शरत्कालदिवां जे । प्रावृषिजः । शरदिजः । कालेजः दिविजः ।

२५. आनङ् ऋतो द्वन्द्वे । होतापोतारौ । होतृपोतृनेष्टोद्गातारः । मातापितरौ । पुत्र इत्यनुवृत्तेः पितापुत्रौ ।

२६. देवताद्वन्द्वे च । मित्रावरुणौ । * वायुशब्दप्रयोगे प्रतिषेधः * अग्निवायू । वाय्वग्नी । पुनर्द्वन्द्वग्रहणं प्रसिद्धसाहचर्य्यस्य परिग्रहार्थम् । नेह :— ब्रह्मप्रजापती ।

---

१—टिप्पणी—षष्ठाध्याय द्वितीयपादे केवलं स्वरनियन्त्रकाणि सूत्राणि वर्त्तन्ते तानि च नो विषया "लघुपाणिनीय"स्य । अतो नात्र द्वितीयपादः । इति ।

६६. यजयाचरुचप्रवचर्चश्च । याज्यम् । याच्यम् । रोच्यम् । प्रवाच्यम् । अर्च्यम् । * त्यजेश्च * त्याज्यम् ।

६७. वचोऽशब्दसंज्ञायाम् । वाच्यम् । शब्दाख्यायान्तु, वाक्यम् ।

६८. प्रयोज्यनियोज्यौ शक्यार्थे । प्रयोक्तुं शक्यः, प्रयोज्यः । नियोज्यो भृत्यः ।

६९. भोज्यं भक्ष्ये । भोज्य ओदनः । भोग्यमन्यत् ।

७१. ओतः श्यनि । श्यति । छ्यति । द्यति । अवस्यति । क्रमेणैतेषां धातवः—शो तनुकरणे, छो छेदने, दो अवखण्डने, षोऽन्तकर्मणि ।

७२. क्सस्याचि । अधुक्षाताम् । अधुक्षाथाम् । अधुक्षि । नेह :- अधुक्षत् ।

७३. लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये । अदुग्ध, अधुक्षत । अदुग्धाः, अधुक्षथाः । अदुग्ध्वम्, अधुक्षध्वम् । अदुह्वहि, अधुक्षावहि । अदिग्ध, अधिक्षत । अलीढ, अलिक्षत । अगूढ अघुक्षत ।

७४. शमामष्टानां दीर्घः श्यनि । शाम्यति । ताम्यति । दाम्यति । श्राम्यति । भ्राम्यति । क्षाम्यति । क्लाम्यति । माद्यति । नेह :- भ्रमति ।

७५. ष्ठिवुक्लमुचमां शिति । ष्ठीवति । क्लाम्यति । आचामति । * आङि चम इति वक्तव्यम् । नेह :- चमति । विचमति ।

७६. क्रमः परस्मैपदेषु । क्राम्यति, क्रामति । नेह :- अक्रमते सूर्यः ।

७७. इषुगमियमां छः । इच्छति । गच्छति । यच्छति । नेह :—इष्यति । इष्णाति ।

७८. पाघ्राध्मास्थाम्नादाण्दृश्यर्त्तिसर्त्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः । पिबति । जिघ्रति । धमति । तिष्ठति । मनति । यच्छति । पश्यति । ऋच्छति । धावति । शीयते । सीदति । सरतेर्वेगितायां गतौ धावादेशः । नेह :- सरति । अनुसरति ।

७९. ज्ञाजनोर्जा । जानाति । जायते ।

८०. प्वादीनां ह्रस्वः । पुनाति । लुनाति । स्तृणाति । कृणाति । वृणाति । जिनाति ।

८१. मीनातेर्निगमे । प्रमिणन्ति व्रतानि । लोके तु, प्रमीणन्ति ।

८२. मिदेर्गुणः । मेद्यति । नेह :— मिमिदे ।

८३. जुसि च । अजुहवुः । अबिभयुः । अबिभरुः ।

८४. सार्वधातुकार्धधातुकयोः । भवति । तरति । नयति । कर्त्ता । चेता । स्तोता ।

८५. **जाग्रोऽविचिण्णल्ङित्सु**। जागरयति। जागरकः। जागरं जागरम्। जागरः। जागरितो वर्त्तते। जागर्सिः। नेह :-जागृविः। अजागारि। जजागार। जागृतः। जागृथः।

८६. **पुगन्तलघूपधस्य च**। क्लेपयति। ह्लेपयति। क्नोपयति। भेत्ता। छेत्ता। भेदनम्। छेदनम्।

८७. **नाभ्यस्तस्याचि पिति सार्वधातुके**। नेनिजानि। अनेनिजम्। वेविषाणि। अवेविषम्। नेह :– नेनेक्ति।

८८. **भूसुवोस्तिङि**। अभूत्। अभूः। सुवै। सुवावहै। नेह :– भवति।

८९. **उतो वृद्धिर्लुकि हलि**। यौति। यौषि। यौमि। नौति। स्तौति। नेह :- युतः। स्तुतः।

९०. **ऊर्णोतेर्विभाषा**। ऊर्णौति, ऊर्णोति। ऊर्णौषि, ऊर्णोषि। नेह :— ऊर्णुतः। ऊर्णवानि।

९१. **गुणोऽपृक्ते**। वृद्ध्यपवादः। और्णोत्। और्णोः।

९२. **तृणह इम्**। तृणेढि। तृणेक्षि। तृणेह्मि। अतृणेट्।

९३. **ब्रुव ईट्**। ब्रवीति। ब्रवीषि। ब्रवीमि। अब्रवीत्। नेह :-ब्रूतः। ब्रवाणि।

९४. **यङो वा**। बोभवीति, बोभोति। लालपीति। वावदीति। रोरवीति। न च भवति। वर्वर्त्ति। चर्कर्त्ति।

९५. **तुरुस्तुशम्यमः सार्वधातुके**। तवीति, तौति। तुवीतः, तुतः। रवीति, रौति। रुवीतः, रुतः। स्तवीति, स्तौति। स्तुवीतः, स्तुतः। शमीध्वम्, शाम्यध्वम्। अभ्यमीति, अभ्यमति।

९६. **अस्तिसिचोऽपृक्ते**। आसीत्। आसीः। अकार्षीत्। असावीत्।

९८. **रुदश्च पञ्चभ्यः**। अरोदीत्। अरोदीः। अस्वपीत्। अश्वसीत्। प्राणीत्। अजक्षीत्। अपृक्त इति नेह :- रोदिति। स्वपिति।

९९. **अड्गार्ग्यगालवयोः**। अरोदत्। अरोदः। अस्वपत्। अश्वसत्। प्राणत्। अजक्षत्।

१००. **अदः सर्वेषाम्**। आदत्। आदः। अपृक्तस्येत्येव नेह :- अत्ति।

१०१. **अतो दीर्घो यञि**। भवामि। भवावः। भवामः। पचामि। भविष्यामि। पक्ष्यामि। नेह :-भवतः। पचतः। चिनुवः। केशवः।

१०२. **सुपि च**। रामाभ्याम्। वृक्षाभ्याम्। रामाय। वृक्षाय। नेह :- अग्निभ्याम्। रामस्य।

१०३. बहुवचने झल्येत्। रामेभ्यः। वृक्षेभ्यः। रामेषु। सर्वेषाम्। नेह :- रामाभ्याम्। रामाणाम्। सुपीत्येव। नेह :-यजध्वम्। पचध्वम्।

१०४. ओसि च। रामयोः। वृक्षयोः।

१०५. आङि चापः। रमया। रमयोः। खट्वया। खट्वयोः। बहुराजया। बहुराजयोः। कारीषगन्ध्यया। कारीषगन्ध्ययोः।

१०६. सम्बुद्धौ च। हेरमे। हेखट्वे। हेबहुराजे। हेकारीषगन्ध्ये।

१०७. अम्बार्थनद्योर्ह्रस्वः। हे अम्ब। हे अक्क। हे अल्ल। हे गौरि। हे नदि। हे शार्ङ्गरवि। हे ब्रह्मबन्धु। * असंयुक्ता ये डलकास्तद्वतां ह्रस्वो न * हे अम्बाडे। हे अम्बाले। हे अम्बिके।

१०८. ह्रस्वस्य गुणः। हे हरे। है अग्ने। हे भानो। ह्रस्वविधानसामर्थ्यान्नेह :- हे गौरि। हे नदि।

१०९ जसि च। हरयः। अग्नयः। भानवः। पटवः। धेनवः। बुद्धयः।

११०. ऋतो ङिसर्वनामस्थानयोः। कर्त्तरि। मातरि। पितरि क्रोष्टरि। कर्त्तारौ। मातरौ। पितरौ। क्रोष्टारौ। कर्त्तारः। मातरः क्रोष्टारः।

१११. घेर्ङिति। हरये। अग्नये। भानवे। वायवे। हरेः। भानोः। नेह :— सख्ये। पत्ये। सुपीत्येव। नेह :—पट्वी।

११२. आण्नद्याः। गौर्यै। नद्यै। बहुश्रेयस्यै। ब्रह्मबन्ध्वै। गौर्याः। ब्रह्मबन्ध्वाः।

११३. याडापः। रमायै। बहुराजायै। कारीषगन्ध्यायै।

११४. सर्वनाम्नः स्याड्ढ्रस्वश्च। सर्वस्यै। *विश्वस्यै। यस्यै। तस्यै। कस्यै। सर्वस्याः। विश्वस्याः। यस्याः। तस्याः। कस्याः। आप एव नेह :— भवतें। भवतः।

११६. ङेराम् नद्याम्नीभ्यः। गौर्याम्। नद्याम्। बहुश्रेयस्याम्. ब्रह्मबन्ध्वाम्। रमायाम्। बहुराजायाम्। कारीषगन्ध्यायाम्। सेनान्याम्। ग्रामण्याम्।

११७. इदुद्भ्याम्। मत्याम्। बुद्ध्याम्। धेन्वाम्। पक्षे-अच्चघेः मतौ। बुद्धौ। धेनौ।

११८. औत्। सख्यौ। पत्यौ।

११९. अच्च घेः। हरौ। अग्नौ। भानौ। वायौ। मतौ। धेनौ।

१२०. आङो नाऽस्त्रियाम्। हरिणा। अग्निना। भानुना। वायुना। नेह :—मत्या। धेन्वा।

इति लघुपाणिनीये सप्तमाध्यायस्य तृतीयपादः समाप्तः।

# अथ लघुपाणिनीये सप्तमाध्यायस्य

## चतुर्थपादः

१. णौ चङ्युपधाया ह्रस्वः । अचीकरत् । अजीहरत् । अचीकमत । अलीलवत् । अपीपठत् ।

२. नाग्लोपिशास्वृदिताम् । मालामाख्यत्, अममालत । अत्यरराजत् । अशशासत् । बाधृ-अबबाधत् । याचृ-अययाचत् । ढौकृ-अडुढौकत् ।

३. भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम् । अबिभ्रजत्, अबभ्राजत् । अबीभसत्, अबभासत् । अबीभषत्, अबभाषत् । अदीदिपत्, अदिदीपत । अजीजिवत्, अजिजीवत् । अमीमिलत्, अमिमीलत् । अपीपिडत्, अपिपीडत् । * काण्यादीनां वेति वक्तव्यम् * अचीकणत्, अचकाणत् । अवीवणत्, अववाणत् ।

४. लोपः पिबतेरीच्चाभ्यासस्य । अपीप्यत्, अपीप्यताम्, अपीप्यन् ।

५. तिष्ठतेरित् । अतिष्ठिपत्, अतिष्ठिपताम्, अतिष्ठिपन् ।

६. जिघ्रतेर्वा । अजिघ्रिपत्, अजिघ्रपत् । अजिघ्रिपताम्, अजिघ्रपताम् ।

७. उर्ऋत् । इरादीनामपवादः । अचीकृतत्, अचिकीर्त्तत् । अवीवृतत्, अववर्त्तत् । अमीमृजत्, अममार्जत् ।

१०. ऋतश्च संयोगादेर्गुणः । जह्वरतुः । जह्वरुः । सस्वरतुः । सस्वरुः ।

११. ऋच्छत्यृताम् । आनर्च्छ, आनर्च्छतुः, आनर्च्छुः । आर, आरतुः, आरुः । कृ-चकार, चकरतुः चकरुः । गृ-जगरतुः ।

१२. शृदृप्रां ह्रस्वो वा । शश्रतुः, शशरतुः । शश्रुः, शशरुः । दद्रतुः, ददरतुः । दद्रुः, ददरुः । पप्रतुः, पपरतुः । पप्रुः, पपरुः । पक्षे गुणः ।

१३. केऽणः । ज्ञका । कुमारिका । किशोरिका । नेह :—गोका नौका ।

१४. न कपि । कल्याणपञ्चमीकः । बहुकुमारीकः । बहुवधूकः ।

१५. आपोऽन्यतरस्याम् । बहुमालाकः, बहुमालकः ।

१६. ऋदृशोऽङि गुणः । असरत् । अहं तेभ्योऽकरं नमः । अदर्शत्, अदर्शताम् ।

१७. अस्यतेस्थुक् । आस्थत्, आस्थताम्, आस्थन् ।

१८. श्वयतेरः । अश्वत्, अश्वताम्, अश्वन् ।

१९. पतः पुम् । अपप्तत्, अपप्तताम् । अपप्तन् ।

२०. वच उम । अवोचत् । अवोचताम् अवोचन् ।

२१. शीङः सार्वधातुके गुणः । शेते, शयाते, शेरते । नेह :—शिश्ये ।

२२. अयङ् यि क्ङिति । शय्यते । शाशय्यते । प्रशय्य ।

२३. उपसर्गाद्ध्रस्व ऊहतेः । ब्रह्म समुह्यात् । अग्नि समुह्य । समुह्यते । अभ्युह्यते । नेह :—ऊह्यते । क्ङितीत्येव । नेह :—अभ्यूह्योऽयमर्थः ।

२४. एतेर्लिङि । उदियात् । समियात् । अन्वियात् । नेह :—ईयात् ।

२५. अकृत्सार्वधातुकयोर्दीर्घः । क्षीयात् । क्षीयते । चीयात् । चीयते । भृशायते । सुखायते । स्तूयते । तोष्टूयते । नेह :—प्रकृत्य । प्रहृत्य । चनुयात् । सुनुयात् ।

२६. च्वौ च । शुचीकरोति । शुचीभवति । पटूस्यात् ।

२७. रीङ् ऋतः । मात्रीयति । मात्रीयते । चेक्रीयते । पित्र्यम् ।

२८. रिङ् शयग्लिङ्क्षु । आद्रियते । आध्रियते । क्रियते । ह्रियते । क्रियात् । ह्रियात् । नेह :—बिभृयात् । कृषीष्ट ।

२९. गुणोऽर्त्तिसंयोगाद्योः । अर्यते । अर्यात् । स्मर्यते । स्मर्यात् । यीत्येव नेह :-स्वृषीष्ट । ध्वृषीष्ट । असार्वधातुक इत्येव । नेह :—इयृयात् । ऋधातोः विधि लिङि ।

३०. यङि च । अरार्यते । सास्वर्यते । सास्मर्यते । * हन्तेर्हिंसायां यङि घ्नीभावो वाच्यः । जेघ्नीयते । नेह :—जङ्घन्यते ।

३१. ई घ्राध्मोः । जेघ्रीयते । देध्मीयते ।

३२. अस्य च्वौ । शुक्लीभवति । कृष्णीकरोति । ब्रह्मीभवति । गङ्गी-स्यात् । * अव्ययस्य च्वावीत्वं नेति वाच्यम् * दोषाभूतमहः । दिवाभूता रात्रिः ।

३३. क्यचि च । पुत्रीयति । घटीयति । खट्वीयति । मालीयति ।

३४. अशनायोदन्यधनाया बुभुक्षापिपासागर्धेषु । अशनायति । उद-न्यति । धनायति । अन्यत्र तु, अशनीयति । उदकीयति । धनीयति ।

४०. द्यतिस्यतिमास्थामित्ति किति । निर्दितः । निर्दितवान् । अव-सितः । मितः । स्थितः । नेह :—अवदाय । अवदाता ।

४१. शाच्छोरन्यतरस्याम् । निशितम्, निशातम् । छितम्, छातम्, संशि-तम् व्रतम् । संशितो ब्राह्मणः ।

४२. **दधातेर्हिः** । अभिहितम् । निहितम् । हित्वा ।

४३. **जहातेश्च क्त्वि** । हित्वा राज्यं वनं गतः । जिहीतेस्तु, हात्वा ।

४६. **दो दद् घोः** । दत्तः । दत्तवान् । दत्तिः । नेह :—दाप्-दातं बर्हिः । दैप्-अवदातं मुखम् ।

४७. **अच उपसर्गात्तः** । प्रत्तः । अवत्तः । नीत्तम् । सूत्तम् । * अवदत्तं विदत्तं च प्रदत्तं चादिकर्मणि । सुदत्तमनुदत्तं च निदत्तमिति चेष्यते * अवदत्तम् इत्यादि ।

४८. **अपो भि** । अद्भिः । अद्भ्यः । नेह :—अप्सु । * मासश्छन्दसीति वक्तव्यम् * माद्भिः । शाद्भिः । स्ववःस्वतवसोरुषसश्चेष्यते * स्ववद्भिः । स्वतवद्भिः । समुषद्भिरजायथाः ।

४९. **सः स्यार्धधातुके** । वत्स्यति । अवत्स्यत् । विवत्सति । जिघत्सति । नेह :—धासः । वासः ।

५०. **तासस्त्योर्लोपः** । भवितासि । कर्त्तासि । व्यतिसे ।

५१. **रि च** । भवितारौ, भवितारः । कर्त्तारौ, कर्त्तारः । व्यतिरे ।

५२. **ह एति** । एधिताहे । कर्त्ताहे । व्यतिहे ।

५४. **सनि मीमाघुरभलभशकपतपदामच इस्** । मित्सति २ । मित्सते २ । मा-मित्सति । माङ्मेङोः मित्सते । दो-दाण्-दित्सति । दाञ्-दित्सति, दित्सते । देङ्-दित्सते । धेट्-धित्सति । धाञ् धित्सति, धित्सते । रिप्सते । लिप्सते । शिक्षति । पित्सति । प्रित्सते । * राधो हिंसायां सनीस् वाच्यः * रित्सति । नेह :—आरिरात्सति ।

५५. **आप्ज्ञप्यृधामीत्** । ईप्सति । ज्ञीप्सति । ईर्त्संति ।

५६. **दम्भ इच्च** । धीप्सति, धिप्सति ।

५७. **मुचोऽकर्मकस्य गुणो वा** । मोक्षते, मुमुक्षते वा वत्सः स्वयमेव । नेह :—मुमुक्षति वत्सं कृष्णः ।

५८. **अत्र लोपोऽभ्यासस्य** । मित्सतीत्यारभ्य मोक्षत इत्यन्तमुदाहार्यम् ।

५९. **ह्रस्वः** । ढौकृ-डुढौके । डुढौकिषते । त्रौकृ-तुत्रौके । तुत्रौकिषते । अडुढौकत । अतुत्रौकत् ।

६०. **हलादिः शेषः** । बभूव । जग्लौ । पपाच । आट, आटतुः ।

६१. **शर्पूर्वाः खयः** । चुश्च्योत । तस्थौ । चुश्च्योतिषति । तिष्ठासति । पस्पर्धे ।

६२. **कुहोश्चुः** । चकार । चखान । जगाम । जघान । जहार । जह्रौ ।

६३. **न कवतेर्यङि** । कोकूयते । कौतिकुवत्योस्तु, चोकूयते ।

६६. **उरत्** । वव्रश्च । ववृते । ववृधे । नर्नर्ति । नरिनर्त्ति । नरीनर्त्ति ।

६७. **द्युतिस्वाप्योः सम्प्रसारणम्** । दिद्यूते । दिद्युतिषते । दिद्योतिषते । देद्युत्यते । सुष्वापयिषति ।

६८. **व्यथो लिटि** । विव्यथे, विव्यथाते, विव्यथिरे ।

६९. **दीर्घ इणः किति** । ईयतुः, ईयुः । नेह :—इयाय ।

७०. **अत आदेः** । पररूपापवादः । आत, आततुः । आट, आटतुः ।

७१. **तस्मान्नुड् द्विहलः** । आनञ्ज, आनञ्जतुः । आनर्द, आनर्दतुः ।

७२. **अश्नोतेश्च** । आनशे, आनशाते । अश्नातेस्तु, आश । आशतुः ।

७३. **भवतेरः** । बभूव, बभूवतुः । लिटीत्येव । नेह :—बुभूषति । बोभूयते ।

७५. **णिजां त्रयाणां गुणः श्लौः** । नेनेक्ति, नेनिक्तः । वेवेक्ति, वेविक्तः । वेवेष्टि । वेविष्टः, नेह :—निनेज ।

७६. **भृञामित्** । बिभर्ति । मिमीते । जिहीते । नेह :—जहाति । श्लावेव । नेह :—बभार ।

७७. **अर्तिपिपर्त्योश्च** । इयर्ति । पिपर्ति ।

७९. **सन्यतः** । पिपठिषति । पिपक्षति । यियक्षति । पिपासति । नेह :—लुलूषति । पापचिषते ।

८०. **ओः पुयण्ज्यपरे** । पिपविषति । अपीपवत् । पिपावयिषति । अबीभवत् । बिभावयिषति । यियविषति । अयीयवत् । यियावयिषति । अरीरवत् । रिरावयिषति । अलीलवत् । लिलावयिषति । अजीजवत् । जिजावयिषति । नेह :—नुनावयिषति । बुभूषति ।

८१. **स्रवतिशृणोतिद्रवतिप्रवतिप्लवतीच्यवतीनां वा** । असिस्रवत्, असुस्रवत । सिस्रावयिषति, सुस्रावयिषति । अशिश्रवत्, अशुश्रवत् । शिश्रावयिषति, शुश्रावयिषति । अदिद्रवत, अदुद्रवत् । दिद्रावयिषति, दुद्रावयिषति । अपिप्रवत्, अपुप्रवत । पिप्रावयिषति, पुप्रावयिषति । अपिप्लवत् । अपुप्लवत् । पिप्लावयिषति, पुप्लावयिषति । अचिच्यवत्, अचुच्यवत् । चिच्यावयिषति, चुच्यावयिषति, चुच्यावयिषति ।

८२. **गुणो यङ्लुकोः** । बोभूयते । चेचीयते । बोभवीति, बोभोति ।

८३. **दीर्घोऽकितः** । पापच्यते । पापचीति । अटाट्यते । यायज्यते । यायजीति । नेह :—यंयम्यते । यंयमीति । रंरम्यते । रंरमीति ।

८४. **नीग्वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दाम्** । वनीवच्यते । वनीवञ्चीति । सनीस्रस्यते । सनीसंस्रीति । दनीध्वस्यते । दनीध्वंसीति । बनीभ्रस्यते । बनीभ्रंसीति । चनीकस्यते । चनीकसीति । पनीपत्यते । पनीपतीति । पनीपद्यते । पनीपदीति । चनीस्कयते । चनीस्कन्दीति ।

८५. **नुगतोऽनुनासिकान्तस्य** । * पदान्तवच्चेति वक्तव्यम् * यय्ँयम्यते, यंयम्यते । यय्ँयमीति, यंयमीति । जङ्गम्यते, जंगम्यते । जङ्गमीति, जंगमीति । नेह :—वेतिम्यते ।

८६. **जपजभदहदशभञ्जपशां च** । जंजप्यते । जंजपीति । जंजभ्यते । जंजभीति । दंदह्यते । दन्दहीति । दंदश्यते । दन्दशीति । बंभज्यते । बंभजीति । पंपश्यते । पंपशीति । पशः सौत्रो धातुः ।

८७. **चरफलोश्च** । चञ्चूर्यते । चंचुरीति । पंफुल्यते । पंफुलीति ।

८८. **उत्परस्यातः** । चञ्चूर्यते । चञ्चुरीति । पंफुल्यते । पंफुलीति ।

८९. **ति च** । चूर्तिः । प्रफुल्तिः । प्रफुल्तः ।

९०. **रीगृदुपधस्य च** । वरीवृत्यते । वरीवृतीति । वरीवृध्यते । वरीवृधीति । नरीनृत्यते । नरीनृतीति । * रीगृत्वत इति वक्तव्यम् * वरीवृश्च्यते । परीपृच्छयते ।

९१. **रुग्रिकौ च लुकि** । नर्नर्ति, नरिनर्ति, नरीनर्ति । वर्वर्ति, वरिवर्ति, वरीवर्ति ।

९२. **ऋतश्च** । चर्कर्ति, चरिकर्ति, चरीकर्ति । जर्हर्ति, जरिहर्ति, जरीहर्ति । नेह :—कृ-चाकर्ति ।

९३. **सन्वल्लघुनि चङ्परेऽनग्लोपे** । अचीकमत । अचीकरत । अपीपचत् । अपीपवत । अबीभवत । अयीयवत । अजीजवत् । नेह :—अततक्षत् । अजजागरत् । णिङभावपक्षे अचकमत । अचकथत् ।

९४. **दीर्घो लघोः** । अचीकमत । अचीकरत् । अजीहरत् । नेह :- अबिभ्रजत् । अततक्षत् ।

९६. **विभाषा वेष्टिचेष्टयोः** । अववेष्टत्, अविवेष्टत् । अचचेष्टत्, अचिचेष्टत् ।

९७. **ई च गणः** । अजीगणत् । अजगणत् ।

इति लघुपाणिनीये सप्तमाध्यायस्य चतुर्थपादः समाप्तः ।

# अष्टमाध्यायस्य प्रथमपादः

१. सर्वस्य द्वे। इदमधिक्रियते पदस्येत्यतः प्राक्।

२. तस्य परमाम्रेडितम्। चौर चौर ३ घातयामि त्वाम्। वृषल वृषल ३।

४. नित्यवीप्सयोः। पचति पचति। जल्पति जल्पति। भुक्त्वा २, भोजम् २ व्रजति। लुनीहि लुनीहीत्येवायं लुनाति। वृक्षं वृक्षं सिञ्चति। ग्रामो ग्रामो रमणीयः।

५. परेर्वर्जने। परि परि वङ्गेभ्यो वृष्टो देवः। * परेर्वर्जने वा वचनम् * परि वङ्गेभ्यः।

७. उपर्यध्यधसः सामीप्ये। उपर्युपरि ग्रामम्। अध्यधि सुखम्। अधोऽधो लोकम्।

१४. यथास्वे यथायथम्। यथायथं ज्ञाता।

१५. द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु। द्वन्द्वं मन्त्रयते। आचतुरं हीमे पशवो द्वन्द्वं मिथुनीयन्ति। द्वन्द्वं व्युत्क्रान्ताः। द्वन्द्वं यज्ञपात्राणि प्रयुनक्ति। द्वन्द्वं संकर्षणवासुदेवौ।

१६. पदस्य। अधिकारोऽयं प्रागपदान्ताधिकारात्।

१७. पदात्। अधिक्रियत इदं कुत्सने च सुप्यगोत्रादावित्यतः प्राक्।

२०. युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावौ। ग्रामो वां स्वम्। ग्रामो नौ स्वम्। ग्रामो वां दीयते। ग्रामो नौ दीयते। जनो वां पश्यति। जनो नौ पश्यति। स्थग्रहणाच्छ्रूयमाणविभक्तिकयोरेव। नेह :—इति युष्मत्पुत्रोऽस्मत्पुत्रः।

२१. बहुवचनस्य वस्नसौ। ग्रामो वः स्वम्। ग्रामो नः स्वम्। ग्रामो वो दीयते नो दीयते। जनो वः पश्यति नोऽपि।

२२. तेमयावेकवचनस्य। ग्रामस्ते स्वं मेऽपि। ग्रामस्ते दीयते मेऽपि।

२३. त्वामौ द्वितीयायाः। जनस्त्वा पश्यति मापि।

२४. न चवाहाहैवयुक्ते। ग्रामस्तव च स्वं। ग्रामो मम च स्वम्। हरिस्त्वां मां च रक्षतु, ग्रामस्तव वा स्वं मम वा। ग्रामस्तव ह स्वं मम ह स्वम्। ग्रामस्तवाह स्वं ममाह स्वम्। ग्रामस्तवैव स्वं ममैव स्वम्। युक्तग्रहणात्साक्षाद्योगेऽयं निषेधः। नेह :—हरो हरिश्च मे स्वामी।

२५. पश्यार्थैश्चानालोचने। चेतसा त्वां समीक्षते। भक्तस्तव रूपं ध्यायति मम रूपं ध्यायति।

इत्यष्टमाध्यायस्य प्रथमः पादः

# अथाष्टमाध्यायस्य द्वितीयपादः

१. पूर्वत्रासिद्धम् । अधिकारोऽयं विधिश्च । हर इह । विष्ण इह श्रिया उद्यतः । गुरा उत्कः ।

२. नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति । राजभ्याम्, राजभिः । राजवती । पञ्च ब्राह्मण्यः । वृत्रहभ्याम्, वृत्रहभिः । नियमार्थमिदम् । नलोप एव्वेवासिद्धो नान्यत्र :—राजाश्वः । राजीयति , राजायते ।

३. न मु न । अमुना । * सिज्लोप एकादेशे सिद्धो वक्तव्यः * आतीत् । अलावीत् । * निष्ठादेशः षत्वस्वरप्रत्ययेड्विधिषु सिद्धो वक्तव्यः । वृक्णः । वृक्णवान् । क्षीवः । * श्चुत्वं धुटि सिद्धं वक्तव्यम् * अट्श्च्योतति । रट्श्च्योतति ।

७. नलोपः प्रातिपदिकान्तस्य । राजा । राजभ्याम् । यूषभ्याम् । राजता । नेह :—अहन् । राजानौ ।

८. न ङिसम्बुद्ध्योः । परमे व्योमन् । हे राजन् । हे दण्डिन् । * ङावुत्तरपदे प्रतिषेधो वक्तव्यः * चर्मतिलः । ब्रह्मनिष्ठः । * वा नपुंसकानाम् * हे सुपथिन्, हे सुपथि । हे चर्मन्, हे चर्म ।

९. मादुपधायाश्च मतोर्वोऽयवादिभ्यः । किंवान् । शंवान् । ज्ञानवान् । विद्यावान् । लक्ष्मीवान् । शमीवान् । यशस्वान् । भास्वान् । नेह :—यवमान् । भूमिमान् ।

१०. झयः । विद्युत्वान् बलाहकः । मरुत्वान् इन्द्रः ।

११. संज्ञायाम् । अहीवती । मुनीवती ।

१२. आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवद्रुमण्वच्चर्मण्वती । आसन्दीवान् ग्रामः । अष्ठीवान्नाम ऋषिः । चक्रीवान्नाम राजा । कक्षीवान् ऋषिः । रुमण्वान् पर्वतः । चर्मण्वती नदी । असंज्ञायान्तु आसन्नवान् । अस्थिमान् । चक्रवान् । कक्ष्यावान् । लवणवान् । चर्मवती ।

१३. उदन्वानुदधौ च । उदन्वान् समुद्र ऋषिश्च ।

१४. राजन्वान् सौराज्ये । राजन्वती भूः अन्यत्र राजवान् ।

१८. कृपो रो लः । कल्पते । कल्प्ता । चक्लृपे । क्लृप्तः ।

१९. उपसर्गस्यायतौ। प्लायते। मलायते। निर्-निलयते। दुर्-दुलयते। निस्दुसोस्तु निरयते। दुरयते।

२०. ग्रो यङि। जेगिल्यते।

२१. अचि विभाषा। गिलति, गिरति। निगलनम्, निगरणम्।

२२. परेश्च घाङ्कयोः। परिघः, पलिघः। पर्यङ्कः, पल्यङ्कः।

२३. संयोगान्तस्य लोपः। गोमान्। यवमान्। कृतवान्। हृतवान्। * यणः प्रतिषेधो वाच्यः * सुद्ध्युपास्यः। दध्यत्र। मध्वत्र।

२४. रात्सस्य। क्रोष्टुः। पितुः। मातुः। नियमार्थमिदम्। रात्सस्यैव लोपो नान्यस्येति। नेह :—ऊर्क्, ऊर्ग्। अमार्ट्।

२५. धि च। एधिताध्वे। अलविध्वम्। ऐधिध्वम्।

२६. झलो झलि। असैद्धाम्। असैद्धम्। अभित्त। अभैत्ताम्। नेह :— अभित्साताम्।

२७. ह्रस्वादङ्गात्। अकृत। अकृथाः। अहृत। अहृथाः। नेह :— अच्योष्ठ।

२८. इट ईटि। आतीत्। असेवीत्। अकोषीत्।

२९. स्कोः संयोगाद्योरन्ते च। भृट्, भृड्। लग्नः। तट्, तड्। तष्टवान्।

३०. चोः कुः। पक्ता। पक्तुम्। सुयुक्। वाक्।

३१. हो ढः। लिट्, लिड्। सोढा। वोढा। तुराषाट्।

३२. दादेर्धातोर्घः। धुक्, धुग्। दग्धा। दग्धुम्। औपदेशिकस्य दादेर्धातोर्ग्रहणान्नेह :— दामलिट्। इह तु स्यादेव अधोक्।

३३. वा द्रुहमुहष्णुहष्णिहाम्। ध्रुक्, ध्रुग्, ध्रुट्, ध्रुड्। द्रोग्धा, द्रोढा। मित्रध्रुक्, मित्रध्रुट्। मुक्, मुग्, मुट्, मुड्। मोग्धा, मोढा। स्नुक्, स्नुट्। स्नोग्धा, स्नोढा। स्निक्, स्निट्। स्नेग्धा, स्नेढा।

३४. नहो धः। उपानत्। परीणत्। नद्धा। नद्धव्वम्।

३५. आहस्थः। आत्थ। झलीत्येव। नेह :—आह, आहतुः।

३६. व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः। व्रष्टा। व्रष्टुम्। व्रष्टव्यम्। भ्रष्टा। भ्रष्टुम्। भृट्। स्रष्टा। स्रष्टुम्। रज्जुसृट्। मार्ष्टा। मार्ष्टुम्। कंसपरिमृट्। यष्टा। यष्टुम्। देवेट्। उपयट्। राट्। सम्राट्। स्वराट्। विभ्राट्। फणादेरेव भ्राजेर्ग्रहणादन्यस्य न। विभ्राक्। प्रष्टा। प्रष्टुम्। प्राट्। वेष्टा। वेष्टुम। विट्। * परौ व्रजेः षः पदान्ते * परिव्राट्।

३७. एकाचो बशो भष् झषन्तस्य स्ध्वोः । बुध्, बुद् । भोत्स्यते । घुक् । धोक्ष्यते । घ्रूत् । अजघाः । गर्धप् । नेह :—दामलिट् । दास्यति ।

३८. दधस्तथोश्च । धत्तः । धत्थः । धत्से । धद्ध्वम् । नेह :—दधाति ।

३९. झलां जशोऽन्ते । वागीशः । वाग्घरिः ।

४०. झषस्तथोर्धोऽधः । लब्धा । लब्धुम् । अदुग्ध । अदुग्धाः । लेढा । लेढुम् । नेह :—धत्तः ।

४१. षढोः कः सि । वेवेक्षि । वेक्ष्यति । अवेक्ष्यत् । लेक्षि । लेक्ष्यति । लिलिक्षति ।

४२. रदाभ्यां निष्ठातो नः पूर्वस्य च दः । शीर्णः । विस्तीर्णः । निगीर्णः । छिन्नः । भिन्नः । शीर्णवान् । विस्तीर्णवान् । भिन्नवान् ।

४३. संयोगादेरातो धातोर्यण्वतः । द्राणः । स्त्यानः । ग्लानः ।

४४. ल्वादिभ्यः । लूनः । लूनवान् । जीनः । धूनः । * ॠल्वादिभ्यः क्तिन्निष्ठावद्वाच्यः * कीर्णिः । लूनिः । धूनिः । * दुग्वोर्दीर्घश्च * दूनः । गूनः । * पूञो विनाशे * पूना यवाः । पूतमन्यत् । * सिनोतेर्ग्रासकर्मकर्तृकस्य * सिनो ग्रासः । नेह :—सिता पाशेन सूकरी । सितो ग्रासो देवदत्तेन ।

४५. ओदितश्च । भुजो—भुग्नः । ओलस्जी—लग्नः । टुओश्वि—उच्छूनः । ओविजी—उद्विग्नः । सूनः । दूनः । दीनः । उड्डीनः ।

४६. क्षियो दीर्घात् । क्षीणस्तपस्वी । क्षीणवान् । नेह :—क्षितः कामो मया ।

४७. श्योऽस्पर्शे । शीनं घृतम् । संश्यानो वृश्चिकः । नेह :—शीतं जलम् । शीतो वायुः ।

४८. अञ्चोऽनपादाने । समक्नः । नेह :—उदक्तमुदकं कूपात् ।

४९. दिवोऽविजिगीषायाम् । आद्यूनः । परिद्यूनः । नेह :—द्यूतम् ।

५०. निर्वाणोऽवाते । निर्वाणोऽग्निर्मुनिश्च । नेह :—निर्वातो वातः ।

५१. शुषः कः । शुष्कः । शुष्कवान् ।

५२. पचो वः । पक्वः । पक्ववान् ।

५३. क्षायो मः । क्षामः । क्षामवान् ।

५४. प्रस्त्योऽन्यतरस्याम् । प्रस्तीमः, प्रस्तीतः । नेह :—स्त्यानः ।

५५. अनुपसर्गात्फुल्लक्षीबकृशोल्लाघाः । ञिफला—फुल्लः । फुल्लवान् । क्षीबो मत्तः । कृशस्तनुः । उल्लाघो नीरोगः । नेह :—प्रफुल्तः । प्रक्षीबितः । प्रकृशितः । प्रोल्लाघितः , * उत्फुल्लसंफुल्लयोरुपसंख्यानम् * उत्फुल्लः । संफुल्लः ।

५६. नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम् । नुन्नः, नुत्तः । विन्न, वित्तः । उन्नः, उत्तः । त्राणः, त्रातः । घ्राणः, घ्रातः । ह्रीणः, ह्रीतः ।

५७. न ध्याख्यापॄमूर्छिमदाम् । ध्यातः । ध्यातवान् । ख्यातः । पूर्तः । मूर्तः । मत्तः ।

५८. वित्तो भोगप्रत्यययोः । वित्तं धनम् । वित्तः पुरुषः । नेह :— विन्नः ।

५९. भित्तं शकलम् । भित्तं पतति । अन्यत्र भिन्नम् ।

६०. ऋणमाधमर्ण्ये । ऋणं धारयति । ऋतमन्यत् ।

६२. क्विन्प्रत्ययस्य कुः । घृतस्पृक् । मन्त्रस्पृक् । युङ् । स्पृक् ।

६३. नशेर्वा । नक्, नग्, नट्, नड् । नग्भ्याम्, नड्भ्याम् । पदस्येत्येव । नेह :—नशौ ।

६४. मो नो धातोः । प्रशान् । प्रतान् । प्रदान् । नेह :—इदम् । प्रशामौ ।

६५. म्वोश्च । अगन्म । अगन्व । जगन्वान् । क्षमूष्-चक्षण्महे । चक्षण्वहे ।

६६. ससजुषो रुः । जश्त्वापवादः । अग्निरत्र । वायुरत्र । शिवोऽर्च्यः । शिवो वन्द्यः ।

६८. अहन् । अहोभ्याम्, अहोभिः । तदन्तस्यापि । दीर्घाहा निदाघः । हे दीर्घाहो निदाघ । नेह :—दीर्घाहानौ । दीर्घाहानः । * रूपरात्रिरथन्तरेषु रुत्वं वाच्यम् * अहोरूपम् । अहोरात्रिः । अहोरात्रः । अहोरथन्तरम् ।

६९. रोऽसुपि । अहर्भाति । अहरहः । अहर्गणः । नेह :—अहोभ्याम् ।

७२. वसुस्रंसुध्वंस्वनडुहां दः । विद्वद्भ्याम्, विद्वद्भिः । पपिवद्भ्याम् । उखास्रत्, उखास्रद्भ्याम् । पर्णध्वत्, पर्णध्वद्भ्याम् । अनडुद्भ्याम्, अनडुद्भिः । स्वनडुत् । नेह :–विद्वान् ।

७३. तिप्यनस्तेः । अचकात्, अचकाद् । नेह :—आप एवेदं सलिलं सर्वमाः ।

७४. सिपि धातो रुर्वा । अचकाः, अचकात्, अचकाद् ।

७५. दश्च । अभिनः, अभिनत्, अभिनद् । अच्छिनः, अच्छिनत् ।

७६. र्वोरुपधाया दीर्घ इकः । गीः, गीर्भ्याम्, गीर्भिः । धूः । पूः । आशीः ।

७७. हलि च । आस्तीर्णम् । विशीर्णम् । अवगूर्णम् । दीव्यति । सीव्यति । धातोरित्येव । नेह :—दिवमिच्छति, दिव्यति । चतुर इच्छति, चतुर्यति ।

७८. उपधायां च । उर्द—ऊर्दते, ऊर्दांचक्रे । कुर्द—कूर्दते । खुर्द—खूर्दते । हुर्छा—हूर्छिता । नेह :—विव्यतुः । विव्युः ।

७९. न भकुर्छुराम् । धुरि साधुः, धुर्यः । दिव्यम् । कुर्यात् । छुर्यात ।

८०. अदसोऽसेर्दादु दो मः । अमुम्, अमू, अमून् । अमुना, अमूभ्याम् । नेह :—अदस्यति ।

८४. दूराद्धूते च । शक्तून् पिब देवदत्त ३ । यत्र वाक्यान्ते सम्बोधनपदं तत्रायं प्लुत इष्यते । नेह :—देवदत्त सक्तून् पिब ।

८५. हैहेप्रयोगे हैहयोः । है ३ राम, राम है ३ । हे ३ राम, राम हे ३ ।

८६. गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम् । दे३वदत्त, देवद३त्त, देवदत्त ३ । नेह :—कृष्ण ३ ।

८७. ओमभ्यादाने । अभ्यादानम् = आरम्भः । ओ३मग्निमीळे पुरोहितम् । नेह :—ओमित्येकाक्षरं ब्रह्म ।

इत्यष्टमाध्यायस्य द्वितीयः पादः

# अष्टमाध्यायस्य तृतीयपादः

## अथ रुप्रकरणम्

२. अत्रानुनासिकः पूर्वस्य तु वा। सँस्कर्त्ता। संस्कर्त्तुम्। सँस्कर्तव्यम्।

३. आतोऽटि नित्यम्। महाँ इन्द्रः। महाँ असि।

४. अनुनासिकात्परोऽनुस्वारः। संस्कर्त्ता। संस्कर्त्तुम्। संस्कर्त्तव्यम्।

५. समः सुटि। * संपुंकानां सो वक्तव्यः। संस्स्कर्त्ता, संस्स्कर्त्ता। * समो वा लोपमेके * इति भाष्यम्। सँस्कर्त्ता, संस्कर्त्ता।

६. पुमः खय्यम्परे। पुँस्कोकिलः, पुंस्कोकिलः। पुँस्कामा, पुंस्कामा।

७. नश्छव्यप्रशान्। शार्ङ्गिंश्छिन्धि, शार्ङ्गिँश्छिन्धि। चक्रिंस्त्रायस्व, चक्रिँस्त्रायस्व। नेह:—प्रशान् तनोति। भवान्त्सरुः।

१०. नॄन् पे। नॄँः पाहि, नॄंः पाहि, नॄन्पाहि। नॄँः प्रीणीहि, नॄंः प्रीणिहि, नॄन्प्रीणीहि।

१२. कानाम्रेडिते। काँस्कान्, कांस्कान्।

१३. ढो ढे लोपः। गाढा। लेढि। लीढः। उपगूढः।

१४. रो रि। पुना रमते। हरी रम्यः। शम्भू राजते।

१५. खरवसानयोर्विसर्जनीयः। विष्णूस्त्राता। रामः।

१६. रोः सुपि। यशःसु। पयःसु। सुपि रोरेव रेफस्येति। नेह :—गीर्षु। पूर्षु।

१७. भोभगोअघोअपूर्वस्य योऽशि। भो देवाः। भगो नमस्ते। अघो याहि। देवा इह, देवायिह।

१९. लोपः शाकल्यस्य। विष्ण इह, विष्णविह। हर इह। हरयिह, क आस्ते, कयास्ते।

२२. हलि सर्वेषाम्। भो देवाः। भो लक्ष्मि। भो विद्वद्वृन्द। भगो नमस्ते। अघो याहि। देवा नम्याः। देवा यान्ति।

२३. मोऽनुस्वारः। हरिं वन्दे। वनं हसति। पदस्येति नेह :—गम्यते। शम्यते।

२४. नश्चापदान्तस्य झलि। यशांसि। आक्रंस्यते।

२५. मो राजि समः क्वौ। सम्राट्। साम्राज्यम्।

२८. ङ्णोः कुक्टुक् शरि। प्राङ्क्षष्ठः, प्राङ्षष्ठः। सुगण्ट्षष्ठः, सुगण्षष्ठः।

२९. डः सि धुट्। षट्त्सन्तः, षट्सन्तः। षट्त्सु, षट्सु।

३०. नश्च। (सि) सन्त्सः, सन्सः। महान्त्साये, महान्साये।

३१. शि तुक्। सञ्च्छम्भुः, सञ्च्शम्भुः, सञ्छम्भुः, सञ्शम्भुः।

३२. ङमो ह्रस्वादचि ङमुण्नित्यम्। प्रत्यङ्ङात्मा। सुगण्णीशः। सन्नच्युतः।

३३. मय उञो वो वा। किम्वुक्तम्, किमुउक्तम्।

३४. विसर्जनीयस्य सः। (खरि अवसाने च) विष्णुस्त्राता। वृक्षस्तत्र नेह :—वृक्षः।

३५. शर्परे विसर्जनीयः। कःत्सरुः। घनाघनःक्षोभणः। वासःक्षौमम्

३६. वा शरि। हरिश्शेते, हरिःशेते। * खर्परे शरि वा विसर्गलोपः रामस्थाता। हरिस्फुरति।

३७. कुप्वोः ≍क≍पौ च। (चाद् विसर्गः) क≍करोति, कःकरोति क≍खनति। कःखनति। क≍पचति, कःपचति। क≍फलति, कःफलति।

३८. सोऽपदादौ। * पाशकल्पककाम्येष्विति वाच्यम् * पयस्पाशम् यशस्कल्पम्। यशस्कम्। यशस्काम्यति। * अनव्ययस्येति वाच्यम् * प्रातकल्पम्। नेह :—पयः, कामयते। पयः पिबति। * काम्ये रोरेवेति वाच्यम् नेह :—गीःकाम्यति। धूःकाम्यति।

३९. इणः षः। सर्पिष्पाशम्। सर्पिष्कल्पम्। सर्पिष्कम्। सर्पिष्काम्यति।

४०. नमस्पुरसोर्गत्योः। नमस्करोति, नमः करोति। पुरस्करोति नेह :—पुरः प्रवेक्ष्यन्ते।

४१. इदुदुपधस्य चाप्रत्ययस्य। निष्प्रत्यूहम्। आविष्कृतम्। दुष्कृतम् नेह :—अग्निः करोति। वायुः करोति। एकादेशशास्त्रनिमित्तकस्य न षत्वम् मातुः कृपा। पितुः कृपा। * मुहुसः प्रतिषेधः * मुहुःकामा।

४२. तिरसोऽन्यतरस्याम्। तिरस्कर्त्ता, तिरःकर्त्ता। गतेरित्येव। नेह :— तिरःकृत्वा काण्डं गतः।

४३, द्विस्त्रिश्चतुरिति कृत्वोऽर्थे। द्विष्करोति, द्विःकरोति। त्रिष्करोति, त्रिःकरोति। चतुष्पचति, चतुःपचति। नेह :—चतुष्कपालः।

४६. अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य। अयस्कारः। अयस्कामः। अयस्कंसः। अयस्कुम्भः। अयस्पात्रम्। अयस्कुशा। अयस्कर्णी। नेह :—गीःकारः। स्वःकामः। समास इत्येव। नेह :—यशः करोति। अनुत्तरपदस्थस्येत्येव। नेह :—परमयशःकारः।

४७. अधःशिरसी पदे। अधस्पदम्। शिरस्पदम्। समास इत्येव। नेह :—अधः पदम्। शिरः पदम्।

४८. कस्कादिषु च। कस्कः। कौतस्कुतः। भ्रातुष्पुत्रः।

५३. षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु। वाचस्पतिं विश्वकर्माणम्। दिवस्पुत्राय सूर्याय। दिवस्पृष्ठं भन्दमानः। तमसस्पारमस्य। परिवीत ईळस्पदे। दिवस्पयो दिधिषाणाः। रायस्पोषं यजमानेषु।

५५. अपदान्तस्य मूर्धन्यः। इदं पदद्वयमधिक्रियत आ पादसमाप्तेः।

५६. सहेः साडः सः। तुराषाट्, तुराषाड्। नेह :—तुरासाही।

५७. इण्कोः। इदमप्यधिक्रियत आ पादसमाप्तेः।

५८. नुम्विसर्जनीयशर्व्यवायेऽपि। इदमपि पूर्ववदधिक्रियते। सर्पींषि। यजूंषि। सर्पिःषु। यजुःषु। सर्पिष्षु। यजुष्षु। प्रत्येकं व्यवाय एव। नेह :—निंस्से। निंस्स्व।

५९. आदेशप्रत्यययोः। अग्निषु। वायुषु। गीर्षु। धूर्षु। त्वक्षु। वाक्षु। सिषेव। सुष्वाप। रामेषु। हरिषु। कर्तृषु। नेह :—दास्यति। असौ।

६०. शासिवसिघसीनां च। शिष्टः। अशिषत्। उषितः। जक्षतुः। इण्कोरित्येव। नेह :— शास्ति। वसति। जघास।

६१. स्तौतिण्योरेव षण्यभ्यासात्। तुष्टूषति। सुष्वापयिषति। सिषाधयिषति। सिषेधयिषति। नेह :—सिसिक्षति। तिष्ठासति।

६२. सः स्विदिस्वदिसहीनां च। सिस्वेदयिषति। सिस्वादयिषति। सिसाहयिषति।

६३. प्राक् सितादड्व्यवायेऽपि। अभिषुणोति, अभ्यषुणोत्। परिषुणोति, पर्यषुणोत्। न्यषेधत्, न्यषेधीत्।

६४. स्थादिष्वभ्यासेन चाभ्यासस्य। अभिषिषेणयिषति, परिषिषेणयिषति। निषिषेध। अभिषिषिक्षति, परिषिषिक्षति। अधितष्ठौ। स्थादिष्वेवेति नियमान्नेह :—अभिसुसूर्षति। अभिसिषासति।

६५. **उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम्** । अभिषुणोति । अभिषुवति । अभिष्यति । अभिष्टौति । परिष्टोभते । अनुष्ठास्यति, परितष्ठौ । अभिषेणयति । अभिषेधति । अभिषिञ्चति । परिषजति । परिष्वजते । नेह :—दधि सिञ्चति ।

६६. **सदिरप्रतेः** । निषीदति । विषीदति । न्यषीदत् । निषसाद । नेह :—प्रतिसीदति ।

७०. **परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम्** । परिषेवते निषेवते । विषेवते । पर्यषेवत । परिषिषेविषते । परिषितः । निषितः विषितः । परिषयः । निषयः । विषयः । परिषीव्यति । निषीव्यति । विषीव्यति । परिषहते । निषहते । विषहते । परिष्करोति । परिष्टौति । निष्टौति । विष्टौति । परिष्वजते । विष्वजते ।

७२. **अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु** । अनुष्यन्दते, अनुस्यन्दते वा जलम् । विष्यन्दते, विस्यन्दते । परिष्यन्दते, परिस्यन्दते । अभिष्यन्दते, अभिस्यन्दते । निष्यन्दते, निस्यन्दते । नेह :—अनुस्यन्दते हस्ती । अप्राणिष्विति पर्युदासाश्रयणादिह स्यादेव :—मत्स्योदके अनुष्यन्देते, अनुस्यन्देते ।

७८. **इणः षीध्वंलुङ्लिटां धोऽङ्गात्** । च्योषीढ्वम् । प्लोषीढ्वम् । अच्योढ्वम् । अप्लोढ्वम् । एधांचकृढ्वे ।

७९. **विभाषेटः** । लविषीढ्वम्, लविषीध्वम् । अयिषीढ्वम्, अयिषीध्वम् । आयिढ्वम्, आयिध्वम् । लुलुविढ्वे, लुलुविध्वे ।

८०. **समासेऽङ्गुलेः सङ्गः** । अङ्गुलिषङ्गः । नेह :—अङ्गुलेः सङ्गः ।

८१. **भीरोः स्थानम्** । भीरुष्ठानम् । नेह :—भीरोः स्थानम् ।

८२. **अग्नेः स्तुत्स्तोमसोमाः** । अग्निष्टुत् । अग्निष्टोमः । अग्नीषोमौ ।

८३. **ज्योतिरायुषः स्तोमः** । ज्योतिष्टोमः । आयुष्टोमः । समास इत्येव नेह :—ज्योतिः स्तोमं दर्शयति ।

८४. **मातृपितृभ्यां स्वसा** । मातृष्वसा । पितृष्वसा ।

८५. **मातुःपितुर्भ्यामन्यतरस्याम्** । मातुःष्वसा, मातुःस्वसा । पितुःष्वसा, पितुःस्वसा । समास इत्येव नेह :—मातुः स्वसा ।

८९. **निनदीभ्यां स्नातेः कौशले** । निष्णातः । नदीष्णः । नेह :—निस्नातः । नदीस्नातः ।

९०. **सूत्रं प्रतिस्नातम्** । प्रतिष्णातं सूत्रम् । अन्यत्र प्रतिस्नातम् ।

९१. **कपिष्ठलो गोत्रे** । कपिष्ठलो नाम यस्य सः । कापिष्ठलिः पुत्रः ।

९२. प्रष्ठोऽग्रगामिणि । प्रष्ठो गौः । नेह :—प्रस्थो व्रीहीणाम् ।

९३. वृक्षासनयोर्विष्टरः । विष्टरो वृक्ष आसनं च । अन्यत्र विस्तरः ।

९५. गवियुधिभ्यां स्थिरः । गविष्ठिरः । युधिष्ठिरः ।

९६. विकुशमिपरिभ्यः स्थलम् । विष्ठलम् । कुष्ठलम् । शमिष्ठलम् । परिष्ठलम् ।

९७. अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्क्वङ्गुमञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्निभ्यः स्थः । अम्बष्ठः । आम्बष्ठः । गोष्ठः । भूमिष्ठः । सव्येष्ठः । अपष्ठः । द्विष्ठः । त्रिष्ठः । कुष्ठः । शेकुष्ठः । शङ्कुष्ठः । अङ्गुष्ठः । मञ्जिष्ठः । पुञ्जिष्ठः । परमेष्ठः । बर्हिष्ठः । दिविष्ठः । अग्निष्ठः ।

९८. सुषामादिषु च । सुषामा ब्राह्मणः । सुषन्धिः ।

९९. एति संज्ञायामगात् । हरिषेणः । बारिषेणः । नेह :—हरिसक्थम् । पृथुसेनः । विष्वक्सेनः । इण्कोरित्येव । नेह :—सर्वसेनः ।

१११. सात्पदाद्योः । अग्निसात् । दधिसात् । दधि सिञ्चति । मधु सिञ्चति ।

११२. सिचो यङि । सेसिच्यते । निसेसिच्यते ।

११३. सेधतेर्गतौ । गङ्गां विसेधति । अभिसेधयति गाः । अन्यत्र निषेधति ।

११४. प्रतिस्तब्धनिस्तब्धौ च । प्रतिस्तब्धः । निस्तब्धः ।

११५. सोढः । परिसोढा । परिसोढुम् । परिसोढव्यम् । अन्यत्र परिषहते ।

११६. स्तम्भुसिवुसहां चङि । पर्यतस्तम्भत् । अभ्यतस्तम्भत् । पर्यसोषिवत् । न्यसीषिवत् । पर्यसीषहत् । व्यसीषहत् ।

११७. सुनोतेः स्यसनोः । परिसोष्यति । अभिसोष्यति । अभिसुसूः ।

११८. सदेः परस्य लिटि । अभिषसाद । निषसाद । परिषसाद । * स्वञ्जेरुपसंख्यानम् * परिषस्वजे । अभिषस्वजे ।

इति लघुपाणिनीये अष्टमाध्यायस्य तृतीयपादः समाप्तः

# अथ लघुपाणिनीये
# अष्टमाध्यायस्य चतुर्थपादः

१. रषाभ्यां नो णः समानपदे। आस्तीर्णम्। विस्तीर्णम्। कुष्णाति। पुष्णाति। पूष्णः। पूष्णा। * ऋवर्णाच्चेति वक्तव्यम् * चतसृणाम्। मातृणाम्। पितृणाम्।

२. अट्कुप्वाङ्नुम्व्यवायेऽपि। करणम्। अर्केण। मूर्खेण। दर्पेण। रामेण। पर्याणद्धम्। बृंहणम्। नुम्-ग्रहणमनुस्वारोपलक्षणार्थम्। तृंहणम्। तृम्फणम्। नेह :—प्रेन्वनम्।

३. पूर्वपदात्संज्ञायामगः। द्रुणसः। खरणसः। शूर्पणखा। नेह :—चर्मनासिकः। ऋगयनम्।

४. वनं पुरगामिश्रकासिध्रकाशारिकाकोटराग्रेभ्यः। पुरगावणम्। मिश्रकावणम्। सिध्रकावणम्। शारिकावणम्। कोटरावणम्। अग्रेवणम्। नेह :—कुबेरवनम्। शतधारवनम्।

५. प्रनिरन्तःशरेक्षुप्लक्षाम्रकार्ष्यखदिरपीयूक्षाभ्योऽसंज्ञायामपि। प्रवणम्। निर्वणम्। अन्तर्वणम्। शरवणम्। इक्षुवणम्। प्लक्षवणम्। आम्रवणम्। कार्ष्यवणम्। खदिरवणम्। पीयूक्षावणम्।

६. विभाषौषधिवनस्पतिभ्यः। दूर्वावणम्, दूर्वावनम्। शिरीषवणम्, शिरीषवनम्। * द्व्यच्त्र्यज्भ्यामेव * नेह :—देवदारुवनम्। * इरिकादिभ्यः प्रतिषेधो वक्तव्यः * इरिकावनम्। मिरिकावनम्।

७. अह्नोऽदन्तात्। पूर्वाह्णः। अपराह्णः। नेह :—निरह्नः। दुरह्नः।

८. वाहनमाहितात्। इक्षुवाहणम्। शरवाहणम्। नेह :—इन्द्रवाहनम्।

९. पानं देशे। क्षीरपाणा उशीनराः। सुरापाणाः प्राच्याः। नेह :—दाक्षिपानम्।

१०. वा भावकरणयोः। क्षीरपाणम्, क्षीरपानम्। क्षीरपाणः, क्षीरपानः कंसः। * गिरिनद्यादीनां वा * गिरिणदी, गिरिनदी। चक्रणितम्बा, चक्रनितम्बा।

११. **प्रातिपदिकान्तनुम्विभक्तिषु च।** माषवापिणौ, माषवापिनौ। व्रीहिवापाणि, व्रीहिवापानि। माषवापेण; माषवापेन। * युवादेर्न * रम्ययूना। परिपक्वानि।

१२. **एकाजुत्तदपदे णः।** वृत्रहणौ, वृत्रहण। हरिमाणी। क्षीरपाणि; क्षीरपेणः। रम्यविणा।

१३. **कुमति च।** हरिकामिणौ। हरिकामाणि। हरिकामेण। स्वर्गकामिणः। स्वर्गंगामिणः।

१४. **उपसर्गादसमासेऽपि णोपदेशस्य।** प्रणदति। प्रणमति। प्रणायकः।

१५. **हिनुमीना।** प्रहिणोति, प्रहिणुतः। प्रमीणाति, प्रमीणीतः।

१६. **आनि लोट्।** प्रभवाणि। प्रयाणि। परिवपाणि। नेह :—प्रवपानि मांसानि।

१७. **नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च।** प्रणिगदति, परिणिगदति। प्रणिनर्दति। प्रणिपतति। प्रणिपद्यते। प्रणिददाति। प्रणिदधाति। प्रणिमिमीते। प्रणिमयते। प्रणिष्यति। प्रणिहन्ति। प्रणियाति। प्रणिवाति। प्रणिद्राति। प्रणिप्साति। प्रणिवपति। प्रणिवहति। प्रणिशाम्यति। प्रणिचिनोति। प्रणिदेग्धि। प्रण्यगदत्।

१८. **शेषे विभाषाऽकखादावषान्त उपदेशे।** प्रणिभवति, प्रनिभवति। प्रणिपचति, प्रनिपचति। नेह :—प्रनिकरोति। प्रनिखादति। प्रनिपिनष्टि। प्रनिचकार।

१९. **अनितेः।** प्राणिति। पराणिति।

२०. **अन्तः।** हे प्राण्। हे पराण्।

२१. **उभौ साभ्यासस्य।** प्राणिणिषति। प्राणिणत्। पराणिणत्।

२२. **हन्तेरत्पूर्वस्य।** प्रहण्यते। प्रहणनम्। परिहण्यते। परिहणनम्। नेह :—प्रघ्नन्ति। प्राघानि।

२३. **वमोर्वा।** प्रहण्वः, प्रहन्वः। परिहण्वः, परिहन्वः। प्रहण्मः, प्रहन्मः।

२४. **अन्तरदेशे।** अन्तर्हण्यते। अन्तर्हणनम्। नेह :—अन्तर्हननो देशः। अत्पूर्वस्येत्येव। नेह :— अन्तर्घ्नन्ति। अन्तरघानि।

२५. **अयनं च।** अन्तरयणम्। अदेश एव। नेह :— अन्तरयनो देशः।

२९. कृत्यचः । प्रयाणम् । प्रमाणम् । प्रयाणीयम् । अप्रयाणिः । प्रयायिणी । प्रहीणः । नेह :– प्रमग्नः । प्रभुग्नः । * निर्विण्णस्योपसंख्यानम् * निर्विण्णोऽस्मि खलसङ्गेन । शकारव्यवधानान्नेह :– प्रख्यानम् । प्रख्यानीयम् ।

३०. णेर्विभाषा । प्रयापणम्, प्रयापनम् । प्रयापणीयम्, प्रयापनीयम् । प्रयाप्यमाणं पश्य ।

३१. हलश्चेजुपधात् । प्रकोपणम्, प्रकोपनम् । प्रकोपणीयम्, प्रकोपनीयम् । नेह :– प्रोहणम् । प्रोहणीयम् । प्रवपणम् । प्रवपणीयम् ।

३२. इजादेः सनुमः । प्रेङ्खणम् । प्रेङ्खणीयम् । प्रेङ्गणम् । प्रोम्भणम् । नेह :– प्रमङ्गनम् । प्रमङ्गनीयम् । प्रेन्वनम् । प्रेन्वनीयम् ।

३३. वा निंसनिक्षनिन्दाम् । प्रणिंसनम्, प्रनिंसनम् । प्रणिंसितव्यम्, प्रनिंसितव्यम् । प्रणिक्षणम्, प्रनिक्षणम् । प्रणिन्दनम्, प्रनिन्दनम् ।

३४. न भाभूपूकमिगमिप्यायिवेपाम् । प्रभानम् । प्रभानीयम् । प्रभवनम् । प्रभवनीयम् । प्रपवनम् । प्रपवनीयम् । * पूञ एव ग्रहणमिष्यते * पूङस्तु प्रपवणम् । प्रपवणीयः सोमः । प्रकमनम् । प्रकमनीयम् । प्रगमनम् । प्रप्यायनम् । प्रवेपनम् । * ण्यन्तभादीनामुपसंख्यानम् * प्रभापनम् । प्रभापनीयम् ।

३५. षात्पदान्तात् । निष्पानम् । दुष्पानम् । सर्पिष्पानम् । नेह :– कुष्णाति । पुष्णाति ।

३६. नशेः षान्तस्य । प्रनष्टः । प्रनंष्टा । प्रनंक्ष्यति । नेह :– प्रणश्यति ।

३७. पदान्तस्य । रामान् । हरीन् ।

३८. पदव्यवायेऽपि । माषकुम्भवापेन । चतुरङ्गयोगेन । * अतद्धित इति वाच्यम् * आर्द्रगोमयेण । शुष्कगोमयेण ।

३९. क्षुभ्नादिषु च । क्षुभ्नाति । क्षुभ्नीतः । नृनमनम् । हरिनन्दनः । रामनगरम् । नरीनृत्यते । तृप्नोति । * आचार्यादणत्वं च * आचार्यानी ।

४०. स्तोः श्चुना श्चुः । हरिश्शेते । रामश्चिनोति । सच्चित् । शार्ङ्गिञ्जय ।

४१. ष्टुना ष्टुः । रामष्षष्ठः । रामष्टीकते । पेष्टा । तट्टीका । चक्रिण्ढौकसे ।

४२. न पदान्ताट्टोरनाम् । षट्सन्तः । षट्ते । नेह :–इट्टे । सर्पिष्टमम् । * अनाम्नवतिनगरीणामिति वाच्यम् * षण्णाम् । षण्णवतिः । षण्णगर्यः ।

४३. तोः षि । सन्षष्ठः । महान्षण्डः ।

४४. शात् । विश्नः । प्रश्नः ।

४५. **यरोऽनुनासिकेऽनुनासिको वा।** वाङ्नयति। वाग्नयति। एतन्मुरारिः। एतद्मुरारिः। नेह :– चतुर्मुखः। * प्रत्यये भाषायां नित्यम् * तन्मात्रम्। चिन्मयम्। ककुद्मन्त इत्यत्र तु यवादिगणे निपातनाद्दकारः।

४६. **अचो रहाभ्यां द्वे।** अर्क्कः, अर्कः। ब्रह्म्मा, ब्रह्मा। गौर्य्यौ, गौर्यौ। ह्य्यनुभवः, ह्यनुभवः। नह्य्यस्ति, नह्यस्ति। नेह :– ह्नुते।

४७. **अनचि च।** सुद्ध्युपास्यः, सुध्युपास्यः। मद्ध्वरिः, मध्वरिः। वाक्क्, वाक्। नेह :– स्मितम्। * यणो मयो द्वे वाच्ये * ऊल्क्का, उल्का। वल्म्मीकः, वल्मीकः। सुध्ध्युपास्यः, सुध्युपास्यः। मध्ध्वरिः, मध्वरिः। * शरः खयः * स्त्थाली, स्थाली। स्त्थाता, स्थाता। संस्क्कर्त्ता, संस्कर्त्ता। संस्कर्त्ता, संस्कर्त्ता। वत्स्सरः, वत्सरः। अप्स्सराः, अप्सराः।

४८. **शरोऽचि।** कर्षति। वर्षति। चतुर्षु। नेह :–दश्श्यंते।

५३. **झलां जश् झशि।** लब्धा। दोग्धा। बोद्धा। सुद्ध्युपास्यः। नेह :–दत्तः।

५४. **अभ्यासे चर्च।** चिच्छेद। तिष्ठासति। बुभूषति। बभूव। जघान डुढौके। ददौ। डिड्ये।

५५. **खरि च।** भेत्ता। भेत्स्यति। तच्छिवः। योत्स्यते। आरिप्सते।

५६. **वाऽवसाने।** वाक्, वाग्। रामात्, रामाद्। लिट्, लिड्। नेह :–वागीशः।

५७. **अणोऽप्रगृह्यस्यानुनासिकः।** दधिँ, दधि। मधुँ, मधु। नेह :– कर्त्तृ। अग्नी।

५८. **अनुस्वारस्य ययि परसवर्णः।** अङ्कितः। अञ्चितः। कुण्ठितः। शान्तः। गुम्फितः। कुर्वन्ति। नेह :– आक्रंस्यते।

५९. **वा पदान्तस्य।** त्वङ्करोषि, त्वं करोषि। सय्ँयन्ता, संयन्ता। सव्ँवत्सरः, संवत्सरः। यल्ँलोकम्, यं लोकम्। तङ्कथञ्चित्रपक्षण्डयमानन्नभःस्थम्पुरुषोऽवधीत् ?, तं कथं चित्रपक्षं डयमानं नभःस्थं पुरुषोऽवधीत् ?

६०. **तोर्लि।** तल्लयः। विद्वाल्ँलिखति।

६१. **उदः स्थास्तम्भोः पूर्वस्य।** उत्थानम्। उत्तम्भनम्। उत्थाता। उत्तम्भिता।

६२. **झयो होऽन्यतरस्याम्।** वाग्घरिः, वाग्हरिः। लिड्ढसति लिड्हसति। तद्धविः, तद्हविः। त्रिष्टुब्भसति, त्रिष्टुब्हसति।

६३. शश्छोऽटि । तच्छिवः, तच्शिवः । * छत्वममीति वाच्यम् * तच्छ्लोकेन, तच्श्लोकेन ।

६४. हलो यमां यमि लोपः । शय्या । शय्य्या । आदित्यो देवतास्य, आदित्यं हविः । आदित्य्यम् । नेह :– अन्नम् ।

६५. झरो झरि सवर्णे । प्रत्तम्, प्रत्त्तम् । अवत्तम्, अत्त्तम् । नेह :– तक्षा ।

इति लघुपाणिनीये अष्टमाध्यायस्य चतुर्थपादः समाप्तः ।

देवभाषात्मिके शास्त्रे प्रविविक्षु-द्विजन्मनाम् ।
विहितं शीघ्रबोधाय पाणिनीयमिदं लघु ॥

इति लघु-पाणिनीयं समाप्तम् ।

त्वदीयं वस्तु गोविन्द तुभ्यमेव समर्पये-सोहम् ।

लघुपाणिनीये सङ्कलितामां

# पाणिनीयाष्टाध्यायीसूत्राणां सूची


अ अ ८।४।६८
अंशंहारी ५।२।६९
अकःसवर्णेदीर्घः ६।१।१०१
अकथितं च १।४।५१
अकर्तरि च० ३।३।१९
अकर्मकाच्च १।३।२६
अकर्मकाच्च १।३।३५
अकर्मकाच्च १।३।४५
अकृत्सार्वधातु० ७।४।२५
अक्षशलाका० २।१।१०
अक्ष्णोऽदर्शनात् ५।४।७६
अग्नेःस्तुत्स्तोम० ८।३।८२
अग्नेर्ढक् ४।२।३३
अग्राद्यत् ४।४।११६
अङ्गस्य ६।४।१
अङ्गुलेर्दारुणि ५।४।११४
अच उपसर्गात्तः ७।४।४७
अचः कर्मकर्तरि ३।१।६२
अचः परस्मिन्० १।१।५७
अचतुरविचतुर० ५।४।७७
अचश्च १।२।२८
अचस्तास्वत्थल्य ७।२।६१
अचित्तहस्तिधेनो० ४।२।४७
अचि र ऋतः ७।२।१००
अचि विभाषा ८।२।२१
अचि श्नुधातु० ६।४।७७
अचोऽञ्णिति ७।२।११५
अचोऽन्त्यादि टि १।१।६४
अचो यत् ३।१।९७
अचो रहाभ्यां द्वे ८।४।४६
अच्च घेः ७।३।११९
अच्छ गत्यर्थवदेषु १।४।६९
अजादेर्द्वितीयस्य ६।१।२
अजाद्यतष्टाप् ४।१।४
अजाद्यदन्तम् २।२।३३
अजिव्रज्योश्च ७।३।६०
अज्ञाते ५।३।७३
अञ्चेः पूजायाम् ७।२।५३
अञ्चेर्लुक् ५।३।३०
अञ्चोऽनपादाने ८।२।४८
अञ्जेः सिचि ७।२।७१
अञ्नासिकायाः ५।४।११८
अट्कुप्वाङ् ८।४।२
अड्भ्यास व्यवायेऽपि ६।१।१३६
अङ् गार्ग्य० ७।३।९९
अणुदित्सवर्णस्य० १।१।६९
अणृगयनादिभ्यः ४।३।७३
अणोऽप्रगृह्य० ८।४।५७
अण्च ५।२।१०३
अत आदेः ७।४।७०
अत इञ् ४।१।९५
अत इनिठनौ ५।२।११५
अत उत्सार्व० ६।४।११०
अत उपधायाः ७।२।११६
अत एकहल्० ६।४।१२०
अतः कृकमि० ८।३।४६
अतिथेर्ञ्यः ५।४।२६
अतिरतिक्रमणे च १।४।९५
अतिशायने ५।३।५५
अतो गुणे ६।१।९७
अतो दीर्घो यञि ७।३।१०१
अतो भिस ऐस् ७।१।९
अतोऽम् ७।१।२४
अतो येयः ७।२।८०
अतो रोरप्लुतादप्लुते ६।१।११३
अतो लोपः ६।४।४८
अतो ल्रान्तस्य ७।२।२
अतो हलादेर्लघोः ७।२।७
अतो हेः ६।४।१०५
अत्यन्तसंयोगे च २।१।२९
अत्रलोपोऽभ्यास० ७।४।५८
अत्रानुनासिकः ८।३।२
अत्वसन्तस्य ६।४।१४
अदः सर्वेषाम् ७।३।१००
अदभ्यस्तात् ७।१।४
अदर्शनं लोपः १।१।६०

अदस औसु ० ७।२।१०७
अदसो मात १।१।१२
अदसोऽसेर्दादु ८।२।८०
अदिप्रभृतिभ्यः २।४।७२
अदूरभवश्च ४।२।७०
अदेङ् गुणः १।१।२
अदो जग्धिर्ल्यप्ति० २।४।३६
अदोऽनुपदेशे १।४।७०
अद्दुतरादिभ्यः ७।१।२५
अधःशिरसी पदे ८।२।४७
अधिकरणवाचि० २।३।६८
अधिकरणवाचि० २।२।१३
अधिकरणविचाले ५।३।४३
अधिकृत्य कृते ४।३।८७
अधिपरी अनर्थकौ १।४।९३
अधिरीश्वरे १।४।९७
अधिशीङ्स्था० १।४।४६
अधुना ५।३।१७
अघेः मसहने १।३।३३
अध्यायन्यायो० ३।३।१२२
अन् ६।४।१६७
अनङ् सौ ७।१।९३
अनचि च ८।४।४७
अनत्याधान० १।४।७५
अनद्यतने लङ् ३।२।१११
अनद्यतने लुट् ३।३।१५
अनद्यतने र्हिल्० ५।३।२१
अनभिहिते २।३।१
अनश्च ५।४।१०८
अनाप्यकः ७।२।११२
अनितेः ८।४।१९
अनिदितां हल० ६।४।२४
अनुकरणं चानिति० १।४।६२
अनुदात्तङित० १।३।१२
अनुदास्य चर्दूप० ६।१।५९
अनुदात्तोपदेशवन० ६।४।३७
अनुनासिकात्० ८।३।४
अनुपराभ्यां कृञः १।३।७९
अनुपसर्गाज्ज्ञः १।३।७६
अनुपसर्गात्फुल्ल० ८।२।५५
अनुपसर्गाद्वा १।३।४३
अनुपसर्जनात् ४।१।१४
अनुप्रतिगृणश्च १।४।४१
अनुर्यत्समया २।१।१५
अनुर्लक्षणे १।४।८४
अनुविपर्यभिनि०८।३।७२
अनुशतिकादीनां ७।३।२०
अनुस्वारस्य ८।४।५८
अनेकमन्यपदार्थे २।२।२४
अनेकाल्शित्० १।१।५५
अन्तः ८।४।२०
अन्तरदेशे ८।४।२४
अन्तरपरिग्रहे १।४।६५
अन्तरान्तरेण युक्ते २।३।४
अन्तर्धौ येनादर्शन० १।४।२८
अन्तर्बहिर्भ्यां० ५।४।११७
अन्तर्वत्पति० ४।१।३२
अन्तात्यन्ताध्व० ३।२।४८
अन्तादिवच्च ६।१।८५
अन्तिकबाढयोर्नेद० ५।३।६३
अन्नेन व्यञ्जनम् २।१।३४
अन्यपदार्थे च २।१।२१
अन्यारादितरर्ते २।३।२९
अन्येभ्योऽपि ३।२।७५
अन्येषामपि ६।३।१३७
अन्येष्वपि ३।२।१०१
अपचितश्च ७।२।३०
अपत्यं पौत्र० ४।१।१६२
अपदान्तस्य मूर्ध०८।३।५५
अपपरिबहिरञ्चवः २।१।१२
अपपरी वर्जने १।४।८८
अपवर्गे तृतीया २।३।६
अपह्नवे ज्ञः ७।३।४४
अपादाने पञ्चमी २।३।३८
अपिः पदार्थसं १।४।९६
अपृक्त एकाल्० १।२।४१
अपोनप्त्रपांनप्तृ० ४।२।२७
अपो भि ७।४।४८
अप्तृन्तृच्स्वसृ० ६।४।११
अप्पूरणीप्रमा० ५।४।११६
अप्रत्ययात् ३।३।१०२
अभाषितपुंस्काच्च७।३।४८
अभिजनश्च ४।३।९०
अभिनिविशश्च १।४।४७
अभिप्रत्यतिभ्यः १।३।८०
अभिरभागे १।४।९१
अभेश्चाविदूर्ये०७।२।२५
अभ्यस्तस्य च ६।१।३३
अभ्यासस्यासवर्णे ६।४।७८
अभ्यासाच्च ७।३।५५

अभ्यासे चर्च ८।४।५४
अमि पूर्वं ६।१।१०७
अम्बाम्बगोभू० ८।३।९७
अम्बार्थनद्यो० ७।३।१०७
अम् संबुद्धौ ७।१।९९
अयङ् यि क्ङिति ७।४।२२
अयनं च ८।४।२५
अरण्यान्मनुष्ये ४।२।१२९
अरुर्द्विषदजन्तस्य ६।३।६७
अर्तिपिपर्त्योश्च ७।४।७७
अर्तिलूधूसूखन०३।२।१८४
अर्तिह्रीव्लीरी ७।३।३६
अर्थवदधातुर० १।२।४५
अर्दे संनिविभ्य: ७।२।२४
अर्धं नपुंसकम् २।२।२
अर्धर्चा: पुंसि च २।४।३१
अर्वणस्त्रसाव० ६।४।१२७
अर्शआदिभ्यो० ५।२।१२७
अर्हे कृत्यतृचश्च ३।३।१६९
अलंकृञ्निराकृ०३।२।१३६
अलुगुत्तरपदे ६।३।१
अलोऽन्त्यस्य १।१।५२
अलोऽन्त्यात्पूर्व० १।१।६५
अल्पाख्यायाम् ५।४।१३६
अल्पाच्तरम् २।२।३४
अवसमन्धेभ्य० ५।४।७९
अवे: क: ५।४।२८
अवे तृस्त्रोर्घञ् ३।३।१२०
अव्यक्तानुकरणा०५।४।५७
अव्ययं विभक्ति० २।१।६
अव्ययसर्वना० ५।३।७१
अव्ययात्त्यप् ४।२।१०४
अव्ययादाप्सुप: २।४।८२
अव्ययीभाव: २।१।५
अव्ययीभावश्च १।१।४१
अव्ययीभावश्च २।४।१८
अव्ययीभावे चा० ६।३।८१
अव्ययीभावे शर० ५।४।१०७
अशनायोदन्यध० ७।४।३४
अश्नोतेश्च ७।४।७२
अश्वक्षीरवृषलवणा० ७।१।५१
अश्वपत्यादिभ्यश्च ४।१।८४
अष्टन आ विभक्तौ ७।२।८४
अष्टन: संज्ञायाम् ६।३।१२५
अष्टाभ्य औश् ७।१।२१
असंयोगाल्लिट् १।२।५
अ सांप्रतिके ४।३।९
असिद्धवदत्राभात् ६।४।२२
अस्तं च १।४।६८
अस्ताति च ५।३।४०
अस्तिनास्ति० ४।४।६०
अस्तिसिचोऽपृक्ते ७।३।९६
अस्तेर्भू: २।४।५२
अस्थिदधिसक्थ्य० ७।१।७५
अस्मदो द्वयोश्च १।२।५९
अस्मद्युत्तम: १।४।१०७
अस्मायामेधा० ५।२।१२१
अस्य च्वौ ७।४।३२
अस्यतिवक्तिख्या०३।१।५२
अस्यतेस्थुक् ७।४।१७
अहंशुभयोर्युस् ५।२।१४०
अहन् ८।२।६८
अह्नोऽदन्तात् ८।४।७
अह्नोऽह्न एतेभ्य: ५।४।८८

आ

आकडारादेका संज्ञा १।४।१
आख्यातोपयोगे १।४।२९
आग्रहायण्यश्व० ४।२।२२
आङ उद्गमने १।३।४०
आङि चाप: ७।३।१०५
आङो दोऽनास्य० १।३।२०
आङो ना० ७।३।१२०
आङो यमहन: १।३।२८
आङो यि ७।१।६५
आङ् मर्यादाभि० २।१।१३
आङ् मर्यादावचने १।४।८९
आ च त्वात् ५।१।१२०
आ च हौ ६।४।११७
आच्छीनद्योर्नुम् ७।१।८०
आटश्च ६।१।९०
आडजादीनाम् ६।४।७२
आदुत्तमस्य पिच्च ३।४।९२
आढ्यसुभगस्थूल० ३।२।५६
आण् नद्या: ७।३।११२
आत औ णल: ७।१।३४
आत: ३।४।११०
आतश्चोपसर्गे ३।१।१३६
आतश्चोपसर्गे ३।३।१०६

आतो ङितः ७।२।८१
आतोऽटि नित्यम् ८।३।३
आतोऽनुपसर्गे कः ३।२।३
आतो मनिन्० ३।२।७४
आतो युक् चिण् ७।३।३३
आतो लोप इटि च ६।४।६४
आत्मनश्च ६।३।६
आत्मनेपदेष्वनतः ७।१।५
आत्मनेपदेष्व २।४।४४
आत्मनेपदेष्वन्य० ३।१।५४
आत्मन्विश्वजन० ५।१।९
आत्माध्वानौ खे ६।४।१६९
आदरानादरयोः १।४।६३
आदाचार्याणाम् ७।३।४९
आदिकर्मणि क्तः ३।४।७१
आदितश्च ७।२।१६
आदिरन्त्येन १।१।७१
आदिर्ञिटुडवः १।३।५
आदेः परस्य १।१।५४
आदेच उपदेशे० ६।१।४५
आदेशप्रत्यययोः ८।३।५९
आद् गुणः ६।१।८७
आद्यन्तवदेकस्मिन् १।१।२१
आद्यन्तौ टकितौ १।१।४६
आधारोऽधिकरणम् १।४।४५
आनङृतो द्वन्द्वे ६।३।२५
आनि लोट् ८।४।१६
आने मुक् ७।२।८२
आन्महतः ६।३।४६
आपोऽन्यतर० ७।४।१५
आप्ज्ञप्यृधामीत् ७।४।५५
आभीक्ष्ण्ये णमुल्च ३।४।२२
आमः २।४।८१
आमि सर्वनाम्नः ७।१।५२
आमेतः ३।४।९०
आम्प्रत्ययवत्० १।३।६३
आयनेयीनीयियः ७।१।२
आयादय आर्ध० ३।१।३१
आरगुदीचाम् ४।१।१३०
आर्धधातुकं शेषः ३।४।११४
आर्धधातुकस्ये० ७।२।३५
आर्धधातुके २।४।३५
आर्धधातुके ६।४।४६
आर्हादगोपुच्छ० ५।१।१९
आलजाटचौ ५।२।१२५
आवश्यकाधम० ३।३।१७०
आवसथात्ष्ठल् ४।४।७४
आशिषि लिङ्० ३।३।१७३
आसन्दीवदष्ठी० ८।२।१२
आ सर्वनाम्नः ६।३।९१
आहस्थः ८।२।३५
आहि च दूरे ५।३।३७

इ

इकः काशे ६।३।१२३
इको गुणवृद्धी १।१।३
इकोऽचिविभक्तौ ७।१।७३
इको यणचि ६।१।७७
इको ह्रस्वोऽङ्यो० ६।३।६१
इगन्ताच्च लघु० ५।१।१३१
इगुपधज्ञाप्रीकिरः ३।१।१३५
इग्यणः संप्रसारणम् १।१।४५
इङश्च २।४।४८
इङश्च ३।३।२१
इच्कर्मव्यतिहारे ५।४।१२७
इच्छा ३।३।१०१
इजादेः सनुमः ८।४।३२
इजादेश्च गुरुमतो० ३।१।३६
इट ईटि ८।२।२८
इटोऽत् ३।४।१०६
इट् सनि वा ७।२।४१
इडत्त्यर्तिव्ययती० ७।२।६६
इणः षः ८।३।३९
इणः षीध्वंलुङ्० ८।३।७८
इणो गा लुङि २।४।४५
इणो यण् ६।४।८१
इण्कोः ८।३।५७
इण्नशजिसर्ति० ३।२।१६३
इण्निष्ठायाम् ७।२।४७
इतश्च ३।४।१००
इतोऽत्सर्वनाम० ७।१।८६
इतो मनुष्यजातेः ४।१।६५
इदंकिमोरीश्की ६।३।९०
इदम इश् ५।३।३
इदमस्थमुः ५।३।२४
इदमो मः ७।२।१०८
इदमोर्हिल् ५।३।१६
इदमो हः ५।३।११
इदितो नुम् धातोः ७।१।५८
इदुदुपधस्य चा० ८।३।४१

